सार्वजनीन एवायमंशो यन्मतान्तरीया जना मतान्तरीयप्रबन्धेष्वप्यसूयाममर्षं विद्वेषं वाप्यधिवहन्तीति । ते च ते च विद्वांसः स्वस्वमतप्रतिभटभूतानां निबन्धानां प्रत्याख्याने परिकरमाबध्नन्तीति च युक्तं नामैतत् । "येन केन प्रकारेण प्रसिद्धः पुरुषो भवे" दित्युक्तरीत्या यथा कथञ्चिदपि प्रख्यातिमाधिजिगमिषवः कतिपये तु सर्वथाप्यसम्बद्धान्विषयान् स्वैरमभिलिख्य महत्तमानां पूर्वाचार्याणां दिव्यसूक्तिषु दूषणाभासानुद्भावयन्त स्तथाविधान् लेखान् पत्रिकासु च प्रकाशयन्तश्चारिताथ्र्यमभिमन्यन्ते । एतादृशानां च प्रक्रियां प्रेक्ष्य प्राञ्च एव महान्तः स्वयं स्वादु समगिरन्त — "स्वहस्तेनोत्क्षिप्तैस्स खलु निजगात्रेषु बहुळं गळद्भिर्जम्बालै र्गगनतलमालिम्पति जडः" इति । आस्तां नामैतत् ।

भगवता बादरायणेन मुनिवरेण प्रणीतस्य शारीरकमीमांसादर्शनस्य भूयांस एव प्राञ्चो महान्तो भाष्याणि बभाषिरे । तेषु चान्यतमं विशिष्टाद्वैतसिद्धान्तनिर्धारणधुरन्धरेण भगवद्रामानुजमुनिसार्वभौमेन विरचितं श्रीभाष्यम् । प्रायशोऽन्येषु भाष्येषु मनागपि दृष्टिमविक्षिपन्तोऽस्मिन्नेव श्रीभाष्ये क्रूरक्रूरां दृशं दिशन्तो बहवो यत्किमपि दूषणमनुद्भाव्य वर्तितुमशक्नुवानाः श्वेतानि पत्राणि शितीनि कुर्वन्तस्स्वात्मन्यानन्दममन्दमनुभवन्तीति कोप्येष पन्थास्तत्र तत्र प्रसर्पति । अमुमेव पन्थानमासेवमानश्श्रीमानशोकनाथभट्टाचार्यनामा कोपि कोविदः श्रीभाष्यविमर्शननामकं कमपि लघीयांसं निबन्धं निर्माय संस्कृतसाहित्यसम्मेळनस्य दशमेधिवेशने पठितवानथ तत्सम्बन्धिन्यास्संस्कृतसाहित्यपरिषन्नाम्न्याः पत्रिकाया दशमवर्षीयदशमसंचिकायां प्राचीकशच्च ।

श्रीरामानुजभाष्यदूषणतत्परेणानेन लघीयसा लेखेन यद्यपि न कापि हानिः श्रीभाष्यस्य श्रीभाष्यकृतां तन्मतानुयायिनां वा, तथापि लेखकस्य तस्य वैदुष्यातिशयो विस्मयनीयस्तत्र विद्योतत इति तमिमं विश्रुतः

प्रचिख्यापयिषवो वयं — दुर्वादिगर्वनिर्वापणनिपुणानां सदर्थसमर्थनैकान्तसमर्थानां च श्रीकांचीप्रतिवादिभयंकरमठाधीश्वराणां **जगद्गुरु – श्रीमदनन्तार्यस्वामिचरणानां** चरणारुणनळिनोपकण्ठे तमिमं पूर्वपक्षलेखमुपहृत्य – निर्मलालोकभूम्ना तमःप्रसृतिर्निरसनीयेति प्रार्थयामहि ।

तैरेतैर्गुरुचरणैः परमकृपया सद्यः प्रसादितं तदेतत् कृतिरत्नं **श्रीभाष्यविमर्शनपरीक्षा**समाख्यं विद्वज्जनमनोविनोदाय सम्मुद्र्य प्रकाशयन्तो वयमर्थाज्जगदुपकारकेष्वन्यतमा भवाम इत्यात्मनि प्रमोदमनुभवामः ।

यद्यपि परीक्षाग्रन्थेऽस्मिन् पूर्वपक्षग्रन्थस्य भागास्तत्र तत्रोदाहृतास्सन्ति , अथापि कृत्स्नस्य तद्ग्रन्थस्यानुवाचनमप्यावश्यकं स्यादित्याशङ्क्य सोऽप्यत्र साकल्येन प्रकाशितोऽस्त्यन्तत इति प्रेक्षन्तामन्तर्वाणयः ।

पूर्वपक्षग्रन्थस्य तावत्प्रमेयमेतावदेव —— श्रीभाष्योपक्रमनिबद्धे माङ्गळिकश्लोकद्वये , अथ "**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः . तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते**" इत्यस्मिन्वाक्ये च भाष्यलक्षणं न समन्वेतीति; जिज्ञासाधिकरणस्य परमतात्पर्यं विशिष्टाद्वैते वा उताद्वैते वेति विचारयितुमुपक्रम्य, शमदमादिसाधनचतुष्टयसम्पत्त्यनन्तरमेव ब्रह्मजिज्ञासा समुत्पद्यत इत्यद्वैतभाष्यकाराणां विवरणमेव सूत्रकोटौ प्रविष्टं , न तु कथमपि विशिष्टाद्वैतभाष्यस्योत्थानमपि सम्भवतीति चोपलभ्यते ।

तदिदमखिलमाचार्यचरणैरिह मधुरगभीरमनोहरशब्दैस्सम्यगेव परीक्षितम् , अपार्थबृन्दमपाकृतम् , परमार्थश्च विशदीकृत इति सुधियस्स्वयं विज्ञास्यन्तीति कृतमनेन विपुलवाग्विसर्गेण ।

इति सविनयमावेदयिता

जगद्गुरु — श्रीस्वामिचरणनळिनोपजीवी ,
वैदिकग्रन्थवर्धनीसभाकार्यदर्शी
श्रीवैष्णवदासः ।

---

श्रीमते रामानुजाय नमः ॥

# श्रीभाष्यविमर्शन परीक्षा ।

[ श्रीकाञ्ची प्रतिवादिभयङ्करसिंहासनाधीश्वर--जगद्गुरु

**श्रीमदनन्ताचार्यस्वामिभिरनुगृहीता । ]**

## मङ्गलाचरणम् ।

देवः श्रीमानखिलजगतामादिकर्ता स्वयम्भूः
भक्तापायप्रशमनविधौ बद्धदीक्षो दयालुः ।
अज्ञानान्ध्यप्रशमनपटुश्चादिवक्ता श्रुतीनां
वाचामीशस्तुरगवदनो मानसे संनिधत्ताम् ॥

यतिपतिभगवद्रामानुजकृतवेदान्तसूत्रसद्भाष्ये ।
उद्भावयन्ति दोषान् केचित् , तन्निरसनार्थ उद्योगः ॥

अशोकनाथभट्टार्यनामभाजा विपश्चिता ।
श्रीरामानुजभाष्यस्य व्यधीयत विमर्शनम् ॥
सभायां पठितं तेन पत्रिकायां च मुद्रितम् ॥
तस्यैतस्य परीक्षायां प्रवृत्तास्स्म स्सतां मुदे ॥

सचायं विमर्शनविलेखकस्तत्रादौ—

" लोकायतजैनसौगत वैशेषिकनैयायिक पातञ्जलकापिलाद्वैतविशिष्टाद्वैतादिदर्शनेषु विशिष्टाद्वैतदर्शनमेव शाङ्कराद्वैतदर्शनस्य प्रबल प्रतिपक्षतया ऽवतिष्ठत इति तमेव विषयमधिकृत्य किञ्चिदिवात्र प्रस्तावयामः "

इति लिखन् विशिष्टाद्वैतसिद्धान्तस्य शाङ्कराद्वैतदर्शनप्रबलप्रतिपक्षभूतत्वमेव प्रकृतश्रीभाष्यविमर्शनप्रवृत्तौ निदानमिति प्रकटयन् स्वस्य शाङ्करसिद्धान्त पक्षपातित्वं स्फुटीकरोति । एवमभिनिवेशवशीकृतचेतसाऽनेन कृतं श्रीभाष्य विमर्शनं वस्तुतो न्यायानुसारि युक्तियुक्तं प्रमाणानुगुणं च भवति वेति परी चिक्षिषामहे वयमिदानीम् ।

वस्तुतस्तु द्वैतसिद्धान्तो यथा शाङ्कराद्वैतदर्शनस्य प्रतिपक्षभूतो न तथा विशिष्टाद्वैतसिद्धान्तः । यतो विशिष्टाद्वैतसिद्धान्तवादिनामपि अद्वैत मभिमतमेव । अद्वैतसमर्थनप्रक्रियामात्रमेव भिन्नं शाङ्कराद्वैतवादिनां विशि ष्टाद्वैतवादिनां च ।

शाङ्करमते ब्रह्मभिन्नस्य कृत्स्नस्य मिथ्यात्वमङ्गीकृत्य अद्वैतमुपपाद्यते । विशिष्टाद्वैतिभिस्तु कृत्स्नस्य जगतस्सत्यत्वमनुभवानुगुणमङ्गीकुर्वद्भिरेव प्रमाणसिद्धं शरीरशरीरिभावरूपं वैशिष्ट्यं चिदचिद्भ्यां ब्रह्मणोऽङ्गीकृत्या ऽद्वैतमुपपाद्यत इति विशेषः । ब्रह्मणो येनकेनापि वैशिष्ट्यं तु शाङ्करमतेप्य ङ्गीकर्तव्यमेव भवति; शुद्धस्य नित्यमुक्तस्वप्रकाशचिन्मात्रै*वपुषो ब्रह्मणो जगदुपादानत्वानुपपत्त्या मायाशब्दिताविद्यावैशिष्ट्याभ्युपगमस्यावश्यक त्वात् ।

इयांस्तु विशेषः । विशिष्टाद्वैतिनश्शास्त्रप्रतिपन्नसर्वशरीरकत्वरूपचिद चिद्वैशिष्ट्यं ब्रह्मणोऽङ्गीकुर्वन्ति; शाङ्कराद्वैतिनस्तु युक्तिप्रमाणविरुद्धमविद्या वैशिष्ट्यमिति । विशिष्टाद्वैतिभिर्ब्रह्मण्यङ्गीक्रियमाणं चिदचिद्वैशिष्ट्यं च नापूर्वतया तैः कल्पितम्, अन्तर्यामिब्राह्मणादिप्रतिपन्नं सकलजगदन्त र्यामित्वमेव चिदचिद्वैशिष्ट्यमित्युच्यते । सर्वान्तर्यामित्वं च सर्वसम्प्रति पन्नमेव ब्रह्मणः । तस्यैव च शब्दान्तरमात्रं चिदचिद्वैशिष्ट्यमिति । इत्थं सर्वसम्प्रतिपन्नार्थमादायैव शास्त्रोदितस्याद्वैतस्योपपादनात्सर्वानुभवविरुद्धं जगतो मिथ्यात्वं तैर्न कल्प्यत इति पुनर्विशेषान्तरम् ।

अथ यदुक्तम्—श्रीभाष्योपक्रमस्थ—"माङ्गलिकश्लोकद्वयं भाष्यतामर्ह-

ति न वेति संक्षेपत आलोचयाम" इत्याद्युपक्रम्य; तत्रेदं प्रस्तूयते । स भगवान् रामानुजो मुनिर्ब्रह्मसूत्राणि व्याचिख्यासुः प्रारिप्सितस्य प्रबन्ध स्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारासिद्धमिष्टदेवतोपासनरूपं गुरूपा सनरूपं च मङ्गलमारचयन् श्रोतृमनस्समाधानार्थं शास्त्रार्थसंक्षेपं च कुर्वन् प्रेक्षावत्प्रवृत्त्यङ्गभूतविषयप्रयोजनादिकं च प्रदर्शयन् अखिलेत्यादिकं **पाराशर्ये**त्यादिकं च श्लोकद्वयं भाष्यादावकरोत् ।

ब्रह्ममीमांसाशास्त्रस्य प्रतिपाद्यमुपाय उपेयं च । सिद्धोपाय उपेयं च ब्रह्म । साध्योपायो भक्तिः । तत्र प्रथमश्लोके अखिलेत्यादिभि स्ससप्तम्य न्तैः पदै स्सिद्धोपायरूपमुपेयरूपं च ब्रह्मोच्यते । **शेमुषी भक्तिरूपे**ति सा ध्योपायस्वरूपमुच्यते । **पाराश**र्येत्यादद्वितीयश्लोके विषयप्रयोजनसम्बन्धा उक्ताः। तत्र भाष्यरूपस्य ग्रन्थस्य परमविषयो ब्रह्म । अवान्तरविषयस्तु पाराशर्यवचांसि । तेषामवान्तरविषयश्चोपनिषदः । तदिदं सर्वं "**पाराशर्य वचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृता**" मिति पदद्वयेनोक्तम्। मुक्तिः परम प्रयोजनम् । सम्यज्ज्ञानमवान्तरप्रयोजनम् । तत्र "**संसाराऽग्नि**" त्यादिपदेन मुक्तिरूपं परमप्रयोजनमुक्तम् । प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धश्चार्थल ब्धः । शास्त्रप्रतिपाद्यप्रधानफलरूपमुक्तिश्चात्र संक्षेपेण प्रतिपादिता ।

इत्थमनयोश्श्लोकयोस्संक्षेपेण सूत्रप्रतिपाद्यार्थप्रतिपादकत्वात् प्रारि प्सितभाष्यग्रन्थाविघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगित्वेन च भाष्यान्तर्गत त्वमिति प्राञ्चः ।

" सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" ॥

इति भाष्यलक्षणम् । श्लोकद्वयं चेदं सूत्रतात्पर्यार्थपरत्वाद्भाष्यलक्षणलक्षि तम् । भाष्यलक्षणशून्यस्यापि ग्रन्थभागस्य भाष्योपयोगित्वे तदन्तर्भावो युक्त इति च प्राचामभिप्रायः ।

" तत्रादौ – ' अखिलभुवनजन्म ............... भक्तिरूपा ॥ ' इति , ' पाराशर्य ............... पिबन्त्वन्वहम् ॥ ' इति च माङ्गलिकश्लोकद्वयं भाष्यतामर्हति न वेति संक्षेपत आलोचयामः । तथा हि — भाष्यलक्षणं लिङ्गादिसंग्रहटीकायामुक्तं भरतेन —

' सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ '

इति । सूत्रोक्तार्थप्रपञ्चकत्वं भाष्यत्वमित्यपि संक्षेपलक्षणम् । अत्र तु मङ्गळाचरणार्थं प्रयुक्तश्लोकद्वये सूत्रानुसारिभिः पदैस्सूत्रार्थ वर्णनं क्रियते भगवता श्रीभाष्यकारेणेति कथमपि कैश्चिन्न वर्णयितुं शक्यते । नापि वा तत्र स्वपदानां वर्णना दृश्यते । अतः श्लोकद्वयं न सूत्रारूढम् । किं तु सूत्रमेव प्रतिभाति ॥ " इति ।

अत्र भाष्यलक्षणश्लोके " वाक्यैस्सूत्रानुकारिभि " रिति " सूत्रानुसारिभि " रिति च पाठद्वयम् । तथा "पदैः " " वाक्यै " रिति च । यत्रेति सप्तम्या घटकत्वार्थकत्वात् यद्घटकीभूतैस्सूत्रानुकारिभिस्सूत्रानुसारिभिर्वा पदैर्वाक्यैर्वा सूत्रार्थो वर्ण्यते, स्वपदानि च वर्ण्यन्ते , तद्भाष्यमित्यर्थो लभ्यते। अत्र स्वपदं भाष्यपरम्। यत्रत्यस्य वाक्यैरित्यनेनान्वयेऽस्यार्थस्यलाभः। वर्ण्यत इत्यनेनान्वयेपि फलतोयमेवार्थो लभ्यते । चकारस्य समुच्चयार्थकत्वात् , सूत्रार्थवर्णनपरसूत्रानुकारिपदघटितत्वे सति स्वपदविवरणपरपदघटितत्वं भाष्यलक्षणं फलितम्। सूत्रानुकारित्वं च वाक्यस्यांशत एव; कार्त्स्न्येन भाष्यवाक्यस्याविकलसूत्रानुकारित्वे सूत्रार्थवर्णनस्यैवासम्भवात् । " सूत्रानुकारिभिः पदै " रिति पाठे च भाष्यघटकानां सूत्रार्थवर्णनपराणां सर्वेषामेव पदानां सूत्रानुकारित्वमविवक्षितम् । सर्वेषामेव पदानां तथात्वविवक्षायां पूर्वोक्तदोषप्रसङ्गात् । वर्णनं नाम बोधजनकशब्दप्रयोगः , संशयविपर्ययाद्यतिवर्तिनिश्चयात्मकं ज्ञानं यावद्भिः पदैर्वाक्यैर्वा प्रयुक्तैर्भवति तावतां शब्दानां वर्णनरूपत्वं भवति। साक्षात्परम्परया वा बोधोपयोगिनामपि

ाध्यायावतरणम्, अधिकरणावतरणमित्याद्यवतरणानि ; प्रत्यधिकरण
ग्रोल्लेखः, विप्रतिपत्तिप्रदर्शनम्, पूर्वपक्षकथनम्, सिद्धान्तकथनम्,
ाडनमित्यादिकम्। सर्वमिदं सूत्रार्थबोधसामग्रीत्वेन सूत्रार्थवर्णनरूपं
रीरेऽन्तर्भवति। अवतरणिकाद्यभावे हि सूत्रार्थबोधो न सुखेन भव
संक्षेपतश्शास्त्रार्थस्य ग्रन्थादौ वर्णनमपि बहुपरिश्रमसाध्यमहत्तमग्र
ाप्रवृत्तौ कारणम्, प्रतिपाद्यार्थस्य संक्षेपतो ज्ञाने सति तदर्थज्ञान
कत्वज्ञाने तदर्थं बहुप्रयाससाध्ये बृहद्ग्रन्थाध्ययने प्रवृत्तिस्स्यात्।
विषयप्रयोजनसम्बन्धादीनां प्रेक्षावत्प्रवृत्त्यङ्गत्वं तान्त्रिकैरभ्युपे
ां ग्रन्थादौ प्रदर्शनं च शिष्टाचारसिद्धम्, युक्तियुक्तञ्च। "इष्टं
ां लोके समासव्यासधारणम्" इति ह्युच्यते।

पूर्वोक्तं सूत्रार्थवर्णनपरसूत्रानुकारिपदवत्त्वे सति स्वपदविवरण
चरूपं भाष्यलक्षणं "अखिले" त्याद्याद्यपद्यद्वयघटिते श्रीभाष्येऽक्ष
द्धटकानि सर्वाणि पदानि सूत्रार्थवर्णनपरसूत्रानुकारिपदरूपाणि स्व
परपदरूपाणि च तदेव भाष्यमिति विवक्षणं त्वसम्भवि। तथा
द्धटकीभूतपदत्वव्यापकं सूत्रार्थवर्णनपरसूत्रानुकारिपदत्वस्वपदवर्णन
ाभयं तद्भाष्यमिति स्यात्, तच्चायुक्तम्; सूत्रार्थवर्णनपरपदेषु
र्णनपरपदत्वस्य तेषु च सूत्रार्थवर्णनपरपदत्वस्य चाभावेनोभयस्य भा
ीभूतपदत्वव्यापकत्वासम्भवात्। अन्यतरस्य तद्व्यापकताविवक्षायां
त्रार्थवर्णनमात्ररूपे सूत्रव्याख्यानेऽतिव्याप्तिः। यस्मिन् ग्रन्थभागे
र्णनं न क्रियते स्वपदवर्णनमात्रमस्ति तत्रातिव्याप्तिश्च। अत्र स्वपदे
र्णनरूपत्वविवक्षया द्वितीयातिव्याप्तिवारणसम्भवेपि प्रथमातिव्याप्ति
शक्यम्। किंचैवं स्वपदे सूत्रार्थवर्णनपरत्वविशेषणे, यानि पदानि

यावद्भिः पदैस्संशयविपर्ययाद्यतीतो निश्चयरूपो भवेत् तावत्पदसाधारणं सूत्रार्थवर्णनपरत्वमास्थेयम् , अन्यथा विप्रतिपत्तिपूर्वपक्षसिद्धान्तपूर्वपक्ष खण्डनादिपरभाष्यभागेष्ववतरणिकादिभागेषु चाव्याप्त्यापत्तेः । एवंच यत्र यत्र भाष्यभागे भाष्यत्वव्यवहारस्तत्तद्भिन्नत्वमपि शून्यत्वप्रतियोगि कोटौ निवेशनीयम , व्यवहारानुसारेणैव लक्षणस्य शिक्षणीयत्वात् । अन्यथा तु "अथ शब्दानुशासनम्" इत्यादेर्वैयाकरणमहाभाष्यग्रन्थभागस्य भाष्यत्वं भज्येत । न खलु तस्य ग्रन्थभागस्य सूत्रार्थवर्णनपरत्वं वा तादृश स्वपदवर्णनपरत्वं वाऽस्ति । न च तस्य भाष्यान्तर्गतत्वं केनापि नाङ्गीक्रियते । "यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः । वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्" " किंलक्षणं पुनस्तद्ब्रह्मेत्यत आह भगवान् सूत्रकारः" इत्यादिशङ्करभाष्य भागस्य सूत्रार्थवर्णनपरत्वं वा स्वपदवर्णनरूपत्वं वा नास्तीति तत्राव्याप्तिश्च। मङ्गळप्रतिज्ञावतरणिकादिरूपस्यापि ग्रन्थभागस्य भाष्यत्वमस्तीत्येव प्राचां सिद्धान्तः ।

## मंगळविचारः ।

यत्तु " केचित् खल्वत्र प्रारिप्सितस्य ग्रन्थस्याविघ्नसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलमपेक्षितमेवेत्याहुः ; तत्रापि मङ्गळस्य विघ्नध्वंस एव फलम्, समाप्तिस्तु बुद्धिप्रतिभादिकारण कलापादिति युक्तं मुक्तावळीवचनमुत्पश्यामः । "

इत्याह श्रीभाष्यविमर्शनकर्ता—

तत्र वदामः ; मङ्गळस्य फलं न समाप्तिः, अपि तु विघ्नध्वंसः, समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापाद्भवति, तस्मादविघ्नसमाप्तिरूपफलार्थं मङ्गळा-

चरणमिति कथनमयुक्तमिति श्रीभाष्यविमर्शनकर्तुरभिप्रायोऽवगम्यते । समाप्तेस्साक्षान्मङ्गळफलत्वाभावेपि समाप्तिम्प्रति मङ्गळस्यापेक्षा तु केनापि न निवारयितुं शक्यते , समाप्तिसामग्रीमध्ये बुद्धिप्रतिभादेरिव विघ्नाभावस्याप्यन्तर्भावात् । अन्यथा विघ्नसद्भावेपि समाप्त्यापत्तेः । बुद्धिप्रतिभादिमानपि पुरुषो विघ्नेषु सत्सु न खलु ग्रन्थं समापयितुं शक्नोति । तस्मात्समाप्तेस्साक्षान्मङ्गलफलत्वाभावेपि तत्र मङ्गलापेक्षास्त्येव , मङ्गलस्य विघ्नाभावं प्रति कारणत्वात् । एतावता मङ्गलस्य समाप्तिं प्रति प्रयोजकत्वं सिद्ध्यति । " मङ्गळस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापादि" त्यादिमुक्तावळीकारादिकथनं तु मङ्गळत्वेन समाप्तित्वेन कार्यकारणभावो मङ्गळत्वेन विघ्नध्वंसत्वेन कार्यकारणभावो वेति विचिकित्सायां मङ्गळत्वेन विघ्नध्वंसत्वेन तत्कल्पनमेव युक्तमित्यभिप्रायकम् । फलायोगव्यवच्छिन्नं कारणं करणमिति मते कार्यकारणयोर्मध्ये व्यापाराङ्गीकारेण मङ्गळस्य समाप्तिकारणतायां विघ्नध्वंसस्य द्वारत्वावश्यकतया मङ्गळस्य कारणत्वासम्भवात् । अत एव ह्यनुमितिं प्रति व्याप्तिज्ञानं करणमिति प्राचीनमतं निराकृत्य परामर्शस्यैव कारणत्वमङ्गीकृतं नवीननैयायिकैः । अविघ्नसमाप्तिरूपविशिष्टफलं प्रति विशेषणसम्पादकतया मङ्गळस्योपयोगस्तु स्पष्ट एव ।

**यदप्ययमाह—**

" न खलु विशिष्टाद्वैतिभिः श्रीभाष्यकारस्य विघ्नसद्भावः कल्प्यते । तन्मते हि भगवदनन्तावतारस्य श्रीमद्रामानुजाचार्यस्य दुरितजन्य विघ्नेनाभिभूतत्वशङ्का सर्वथाऽनवकाशैव । एतदुक्तं भवति; नहि स्वतस्सिद्धविघ्नविरहवता लोकातिशायिना पुरुषेण कृतस्य मङ्गळस्य निष्फलत्वापत्तिः । विघ्नशङ्कया तदाचरणादिति चेन्न; विघ्नसद्भावो

तत्र वदामः । भगवान्भाष्यकारो रामानुजोऽनन्तावतार इति सत्यमेतत् । मङ्गळाचरणं तु स्मृत्याचारसिद्धत्वादेव। मुमुक्षवोपि हि फलसङ्गत्यागपूर्वकं कर्माण्याचरन्तो न फलाय किमप्यनुतिष्ठन्ति , अपि तु शास्त्रविहितमित्येव। भगवदाज्ञारूपशास्त्रसिद्धं कर्म सर्वेषामेवानुष्ठेयम्। फलाभिसन्धिमतामिव तद्रहितानामपि तदनुष्ठानं सर्वसम्प्रतिपन्नम् ।

गीतं हि भगवता कृष्णेन—

" सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तस्समाचरन् ॥ " इति ,

" लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि " । इति च ।

अविदुषामिव विदुषामपि लोकसंग्रहार्थं सर्वं कर्म कर्तव्यं भवतीति भगवता भाष्यकारेण स्मृत्याचारसिद्धमङ्गळाचरणं युक्तमेव । सक्षात्सर्वेश्वरोपि भगवान् लोकसंग्रहार्थं कर्मानुतिष्ठतीति स्थिते नित्यानां मुक्तानां च किमु वक्तव्यम् । उक्तं च भगवता कृष्णेन —

" न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥" इति ।

किञ्च भगवान्रामचन्द्र इव भाष्यकारोपि मानुष्यकाभिनयं कुर्वन् शिष्टाचारसिद्धं सर्वं कर्मानुतिष्ठतीति स्थिते विघ्नशङ्कातदभावादिकुतर्काणां नास्त्येवावकाशः । भगवान्रामचन्द्रो हि स्वावतारकृत्यसम्पत्त्यै सर्वदा मानुष्यकाभिनयमेवाकरोत् । उक्तिश्च भगवतो रामचन्द्रस्य तथा—

" आत्मानं मानुषं मन्ये रामं दशरथात्मजम् " इति ।

भगवान्भाष्यकारोपि स्वावतारकृत्यसम्पत्त्यर्थं मानुष्यकाभिनयमेव सर्वदाऽकरोन्मुक्त्वा कांश्चन प्रसङ्गान् । न खलु भगवान्मानुजोऽहमव तारविशेष इति स्वयमेव कदाचिदवददितीतिहासेषु कुत्राप्यस्ति । तस्मात्तस्य मङ्गळाचरणं युक्तमेव । श्रीभाष्यकारस्य जीवन्मुक्तत्ववादस्त्वग्रे निराकरिष्यते ।

यदप्युक्तम्— " नापि वा मङ्गळमेव सर्वत्र विघ्नध्वंसे कारणम् ; विघ्नध्वंसविशेषे विनायकस्तवपाठादीति सिद्धान्तमुक्तावळ्यां प्रतिपादितत्वात् । नच विनायकस्तवपाठस्य मङ्गळत्वं वाच्यम् ; विनायकस्तवस्य मङ्गळत्वेपि तदनुकूलकण्ठाभिघातरूपस्य पाठस्य मङ्गळत्वाभावात् । एवं हि पूतिकूष्माण्डीभूते खलु मङ्गळे तत्र प्रेक्षावतां प्रवृत्तिरेव नोपपन्ना भवति ॥ " - इति,

अत्र वदामः- मङ्गळस्येव विनायकस्तवपाठस्यापि क्वचित् विघ्नध्वंसविशेषे कारणत्वमास्तां तृणारणिमणिन्यायेन, तावता मङ्गळस्य विघ्नध्वंसजनकतायां को नाम दोषस्समापतति । स्वस्य मुक्तावळीपाठित्वं ज्ञापयताऽनेनापि हि " विघ्नध्वंसविशेषे विनायकस्तवपाठादी" ति मुक्तावळीग्रन्थभागमुदाहरताऽयमर्थस्स्वीकृतः । नच भगवता रामानुजेन विघ्नध्वंसार्थं विनायकस्तवपाठादिरेव कुतो नादृत इति शङ्का युज्यते, तथा सति तिन्त्रिणीफलवक्रतान्यायापातात् । केवलं लोकसङ्ग्रहार्थमेव तस्य मङ्गळाचरणं न विघ्नध्वंसार्थमिति च पूर्वमुक्तम् ।

आशीर्नमस्क्रियावस्तुनिर्देशरूपेषु त्रिविधमङ्गळेष्वाशीरूपं मङ्गळं शब्दरूपम्, नमस्क्रिया च वाचिकी कायिकी मानसिकी च । तासु वाचिकी शब्दरूपा, वस्तुनिर्देशस्तु शब्दरूप एव, स्तुतेरप्यत्रैव कुत्रचिदन्तर्भावो वाच्य । स्तुतिश्च गुणप्रकाशकशब्दः । तस्याश्च मन्त्रस्येवानुसंहिताया वा पठ्यमानाया वा फलजनकत्वं वाच्यम् , न तु स्वरूपतः । तथाच स्तुति

पाठस्य विघ्नध्वंसजनकत्वं वा पठ्यमानस्तुतेस्तथात्वं वेति विनिगमनाविरहात् स्तुतेरपि विघ्नध्वंसजनकत्वमक्षतम् । एतेन "विनायकस्तवस्य मङ्गळत्वेपि तत्पाठस्य मङ्गळत्वाभावादि" ति समाहितम् । विनायकस्तवपाठस्यैव पठ्यमानविनायकस्तवस्य मङ्गळत्वसम्भवात् । विनायकस्तवपाठस्य मङ्गळत्वमस्तु वा मा वा, विनायकस्तवपाठस्यैव मङ्गळस्यापि विघ्नध्वंसजनकत्वं त्वक्षतमेवेति न काप्यनुपपत्तिः ।

यदपि " अथ मङ्गळं यद्येकान्तेनापेक्षितं भवेत्, तदा सूत्रान्तर्भूतेनाथशब्देन ब्रह्मशब्देन च तस्य गतार्थता स्यात्, भगवता भाष्यकारेणैवोच्यते " ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणः पुरुषोत्तमोऽभिधीयते " इति । अथशब्दश्चानन्तर्यार्थोऽपि श्रुत्या मङ्गळप्रयोजनो भवतीति शास्त्रसंमतम् । तथाच स्मर्यते- "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गळिकावुभौ ॥ " इति । मोहरागाद्यखिलदोषसंजननी दुरत्ययाऽविद्यापि यस्य खलु ब्रह्मणः साक्षात्कारेण विनिवर्तते, तस्यैव ब्रह्मणः प्रतिपादनपरे ब्रह्ममीमांसाभाष्ये पृथङ्निवेशितं मङ्गळं पुनरुक्ततामेवापद्यते ।" इति—;

तदपि न क्षोदक्षमम्, सूत्रान्तर्गतेनाऽथशब्देन ब्रह्मशब्देन च सूत्रात्मकग्रन्थस्य निर्विघ्नपरिसमाप्तिरूपप्रयोजननिर्वाहेपि भाष्यस्य निर्विघ्नपरिसमाप्तिरूपं प्रयोजनं कथं सेत्स्यति। भाष्यादौ हि " अखिले" त्यादिश्लोकद्वयं संयोजितमस्ति , न सूत्रारम्भे । माङ्गळिकशब्दघटितसूत्र-व्याख्यानरूपत्वेन भाष्यस्यापि निर्विघ्नसमाप्ति- र्भविष्यतीतिचेत्, तद्व्याख्यानतट्टीकादेरपि तथा स्यात् ।

ब्रह्मणो निरस्तनिखिलदोषत्वात्तत्प्रतिपादकभाष्यस्य विघ्नासंभवान्मङ्गळमनावश्यकमिति वादस्तु परिहास्यः । तथा सति रघुवंशमाघादिकाव्यानामपि भगवच्चरितरूपत्वात् तत्रापि मङ्गळवैयर्थ्यप्रसङ्गात् । प्रायः खलु प्राञ्चः कवयः पुराणादिप्रसिद्धानामुदात्तचरितानां पुरुषविशेषाणामेव

पक्षत्वापि स्यात् । तादृशाः खलु पुरुषविशेषाः आतस्स्मरणीयचरिता भगवदंश-भूता इति स्पष्टं भगवद्गीतासु—

“ यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥ ”

इत्यादौ ।

यत्तु — “ जीवन्मुक्तपुरुषो हि भगवान् भाष्यकार इत्यवश्यमेवाङ्गीकर्तव्यं विशिष्टाद्वैतिभिः । अतीन्द्रियार्थप्रतिपादनेऽतत्वविदां येषांकेषांवाऽनधिकारात् । लोकसंग्रहार्थं मननमुखेनैव वेदान्तार्थपरीक्षारूपं भाष्यं तैरत्र विरच्यते । मङ्गळममङ्गळं वा अमुक्तस्यैव विघ्नध्वंसे विघ्ना ध्वंसे वा तथाचार्थात् ग्रन्थस्य परिसमाप्तावसमाप्तौ वा नियामकं भवतीति युक्तम् । न ताभ्यां मङ्गळामङ्गळाभ्यां तत्वज्ञानिनां किमपि प्रयोजनम् , सङ्कल्पद्वारेणैव तेषामिष्टसाधनसामर्थ्यदर्शनात् । तदुक्तं भगवता बादरायणेन, ' सङ्कल्पादेव तच्छ्रुते ' रिति । अतो मुक्तस्य भाष्यकारस्य ग्रन्थरचनावसरे मङ्गळस्य नियतोपस्थितिकत्वकल्पनेन भाष्यकृतो मुक्तत्वमपि व्याहन्येत ” इति— ;

अत्र वदामः— विशिष्टाद्वैतिभिर्जीवन्मुक्तिरेव नाङ्गीक्रियत इति भाष्यकारस्य जीवन्मुक्तत्वं न तेऽङ्गीकुर्वन्ति । अपि तु नित्यमुक्तत्वम् , नित्यस्यादिशेषस्य हि सोऽवतारः । अतीन्द्रियार्थप्रतिपादने येषांकेषामपि नाधिकार इति तु युक्तमेव । न लोकसंग्रहार्थम् , अपि तु लोकानुग्रहार्थं भाष्यं भगवता रामानुजेन विरचितमिति मन्तव्यम् । नित्यमुक्तावतारोपि भगवान् भाष्यकारो न सङ्कल्पशक्त्या किमपि कार्यं मानुषावतारे कर्तुमैच्छत् , तथा सति तदवतारस्यैवानावश्यकत्वप्रसङ्गात् , अवतारेण साध्यं सर्वमपि हि सङ्कल्पमात्रेण साध्यं तस्य, भगवदवतारेष्वप्ययमेव न्यायः । भगवानपि हि स्वावतारेषु न स्वीयया परया शक्त्या

किमपि कार्यं सम्पादयति विशेषप्रसङ्गमन्तरा, रावणवधादीनां स्वसङ्कल्प मात्रेण साधयितुं शक्यत्वेपि युद्धादिकरणदर्शनात्। भगवतो भाष्यकृतो मङ्गळाचरणं स्मृत्याचारानतिलङ्घनेन लोकसङ्ग्रहार्थमिति पूर्वमेवोक्तम्।

> यत्तु– "एवमेव विषयं मनसि निधायाद्वैताचार्यभगवत्पादैः स्वरचित शारीरकमीमांसाभाष्ये पृथङ्मङ्गळं न निवेशितमिति मन्यामहे" इति।

तत्र वदामः — भगवता शङ्कराचार्येण भाष्यादौ मङ्गळानाचरणं जीवब्रह्मभेदानभ्युपगमेन नन्तव्याभावादिति प्राञ्चः।

व्याख्यातृभिस्तु नमस्काराद्यभावात्कुग्रन्थत्वं भाष्यस्याशङ्क्य युष्मदस्मदित्यादिग्रन्थे प्रत्यगर्थानुसन्धानेनऽर्थान्मङ्गळमपि कृतमिति समाहितमस्ति। अयं त्वपूर्व एव कश्चिद्भाष्यकाराणामाचरणस्य समालोचयिता समुत्पन्नः, किमयमद्वैतभाष्यकारमेकं मुक्त्वा सर्वेऽप्यन्ये न भाष्यकारा इति मन्यते?

> यत्त्वयमाह– "अथ मा भवतु मङ्गळं शाङ्करभाष्ये, अध्याससमर्थनं तु विद्यते तत्र। भाष्यकारेण हि सौत्रपदसूचितानामेवार्थानां निरूपणं कर्तव्यम्, अध्यासः पुनरथातो ब्रह्मजिज्ञासेति सूत्रघटकेन केनापि पदेन स्पष्टं न सूच्यते। तथाच शङ्करभगवत्पादानामध्यासभाष्यं कथं वा सूत्रारूढमिति शङ्कात्र समापतति। इदमेवचात्र समाधानम्। 'अथातो ब्रह्मजिज्ञासे' त्यत्र ब्रह्मशब्देनैवान्तःकरणस्य चैतन्ये आरोपोपि सूच्यत एव। तथाहि — ब्रह्मशब्दस्य कर्तृत्वादिविगळितचैतन्यस्वरूपमर्थः, कर्तृत्वाधिष्ठानचैतन्येऽभावश्च कर्तृत्वादीनां चैतन्ये कल्पितत्वमन्तरेण न सम्भवति। यद्यत्र प्रतीयते तत्तत्र तदैवाविद्यमानमिति वर्णयितुं शक्यते, यदि तत्तत्र कल्पितम्, तदा रज्जौ प्रतीयमानस्सर्पः कल्पितत्वान्न रज्जौ वर्तते; एवं कर्तृत्वस्यापि चैतन्येऽभावो यदि कल्पितत्वेनैव सम्भवति, तर्हि कर्तृत्वादिविगाळितचैतन्यबोधकेन ब्रह्मपदेन कथं कर्तृत्वाद्यारोपोपि न सूच्यते? एवं

च ब्रह्मपदसूचितत्वादध्यासस्य, अध्यासभाष्यं सूत्रारूढमिति बहुशो विचारितत्वादद्वैतिभिर्नात्र पुनर्वयं पिष्टं पेषयामः । '' इति—;

तत्र वदामः— अध्यासस्सूत्रघटकेन ब्रह्मशब्देन सूच्यत इति वदन्, ब्रह्मशब्दस्य कर्तृत्वादिविगळितचैतन्यस्वरूपार्थकत्वमयं वदति, ब्रह्मशब्दस्य योगेन वा रूढ्या वा कर्तृत्वादिविगळितचैतन्यस्वरूपमर्थ इति वयं पृच्छामः? बृहते (र्धातो) र्मनिन्प्रत्ययान्तान्निष्पन्नोयं ब्रह्मशब्दः । बृहत्त्वं च परममहत्त्वमिति केचित्, निरतिशयोत्कर्ष एवेत्यपरे। बृहति बृंहयतीति द्विधा तावद्व्युत्पत्तिः, बृहत्त्वे सति बृंहणत्वं तदर्थः । सङ्कोचकाभावान्निरतिशयबृहत्त्वे सति बृंहणत्वं योगलभ्यो ब्रह्मशब्दार्थः । " बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते " इति चोपबृंहणम् । कर्तृत्वादि विगळितचैतन्यं कथमत्र लभ्यते ? कर्तृत्वादिविगळितचैतन्ये ब्रह्मशब्दरूढि ग्राहकं प्रमाणं च न किमपि स्पष्टमुपलभामहे । ब्रह्मण एव जगन्निमित्त-कारणत्वात्कर्तृत्वसामान्यराहित्यं च न सम्भवति । अङ्गीकृतं च भगवता शङ्कराचार्येणापि ब्रह्मणः कर्तृत्वं " प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् " इत्यधिकरणे— " ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यत " " अभिध्योप-देशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति" इत्यादिषु । कर्तृत्वादिविगळितचैतन्य-स्य ब्रह्मशब्दार्थत्वाङ्गीकारेपि वा कथमध्यासस्य ब्रह्मपदेन सूचना ? न खलु कर्तृत्वरहितं ब्रह्मेत्युक्ते नियमेनाध्यासमन्तरा तद्राहित्यं न सम्भवतीति ज्ञानं भवति?, घटः कर्तृत्वाभाववानित्यादा विव तद्बोधस्य सम्भवात् । न हि तत्र कर्तृत्वाभावः कल्पितत्वप्रयुक्तः । तद्वदत्रापीति कुतो न धीस्स्यात् ? अनुपपत्तिप्रतिसन्धाने हि कल्पित त्वादिस्फुरणम् ?

अस्तु वा ऽध्यासस्य ब्रह्मपदसूचितत्वादध्यासनिरूपणपरभाष्यभाग-

ख्यासितस्येदमादिमं सूत्रम् " इत्यादिभाष्यग्रन्थस्य कथं सूत्रार्थवर्णनपरत्वम्? अभावे च कथं तस्य भाष्यत्वम्।

यत्तु– "वस्तुतस्तु भाष्यकळेबरे मङ्गळविनियोजनेन न केवलं भाष्यकारस्य विघ्नाप्रतियोगित्वं वैयर्थ्यमापद्येत, किन्तु भाष्यस्य भाष्यत्वमपि वितथं स्यात्।" इति।

अत्र विघ्नाप्रतियोगित्वं विघ्नप्रतियोगित्वाभावः। तत्र प्रतियोगित्वं कीदृशं विवक्षितम्? निरूपकत्वादिरूपं तु न सम्भवति। आधेयत्वरूपत्वे चासाङ्गत्यम्, न खलु विघ्नोऽनुयोगी पुरुषस्य क्वचित्, येन विघ्ननिरूपिताधेयत्वाभावो भाष्यकारनिष्ठ इति युज्येत। आधारत्वार्थकता तु प्रतियोगित्वशब्दस्य न सम्भवति।

भाष्यकारनिष्ठस्य विघ्नसामान्याभावस्य वैयर्थ्यं नाम निष्प्रयोजनत्वम्। अस्तु नाम निष्प्रयोजनत्वं विघ्नाभावस्य, को नाम तत्र दोषः? न खलु सर्वेषामत्यन्ताभावानां स्वतस्सिद्धानां किमपि प्रयोजनं सम्पादनीयम्। इदं तु निष्प्रयोजनत्वं तस्यामप्यवस्थायामापद्यते, यदि भाष्यकारस्य भाष्यकरणप्रवृत्तिरेव न स्यात्। स्वतस्सिद्धविघ्नविरहवता पुरुषेण कस्यचिद्ग्रन्थस्यारम्भे विघ्नशङ्कया कृतस्यापि मङ्गळस्य निष्फलत्वं दृश्यते खलु, तद्वदत्रापि भविष्यति। भाष्यकारेण च मङ्गळं स्मृत्याचारसिद्धं लोकसङ्ग्रहार्थं कृतमिति पूर्वमेवोक्तम्। सूत्रार्थवर्णनपरसूत्रानुकारिपदघटितत्वे सति स्वपदवर्णनपरपदघटितत्वरूपभाष्यलक्षणं श्रीभाष्येपि सम्यक्सम्पद्यत इत्यपि पूर्वमेवोक्तम्।

एतेन— " ननु भामतीप्रभृतिषु प्रभूतमेव मङ्गळं दृश्यत इति कथं वा तेषां ग्रन्थानां प्रामाण्यमितिचेदुच्यते। भामती नाम वाचस्पतिमिश्रकृतटीका शङ्करभाष्यविषयिणी। न हि खलु श्रीभाष्यं सर्वथा तदनुरूपम्। श्रीभाष्यविवरणादिषु श्रुतप्रकाशिकादिषु मङ्गळं दृश्यते चेत्तदानीं न कोपि दोषः। परन्तु श्रीभाष्ये तस्यान्तर्भाव

दर्शनेन टङ्कद्रामिडादिभिरेव कृतं मूलभाष्यम्, श्रीभाष्यं पुनस्तेषामन्य तरस्य टीकारूपमिति शङ्का संजायते ।”

इति कुचोदितानि निरस्तानि वेदितव्यानि । टीकास्वेव मङ्गळं कर्तव्यं भाष्य इति केनायं नियमः परिकल्पितः । यस्मिन्ग्रन्थे मङ्गळमस्ति तन्न ाष्यमिति वा किमर्थोयं केन च परिकल्पितो नियमः ? मङ्गळदर्शनमात्रेण ूत्रार्थवर्णनपरे श्रीभाष्ये भाष्यान्तरटीकात्वशङ्कासम्भवकथनं तु परिहा-यम् । प्रत्यक्षतो भाष्यलक्षणदर्शनेऽपि कस्यचिद्भाष्यान्तरटीकात्वशङ्का जा-तेचेद्भ्रान्तस्स एव चिकित्सनीयः, न तेन भाष्यस्य भाष्यत्वं व्याहन्यत ।

यत्तूक्तम्— "ननु संप्रदायसंरक्षणार्थं मङ्गळं भाष्ये निवेशनीयमेव, शिष्टाचारोपरोधादिति चेन्न, शिष्यशिक्षार्थं कृतस्य मङ्गळस्य ग्रन्थ कळेबरेऽयोजनेनाप्यभीष्टसिद्धेः ।” इति —;

तदयुक्तम्— सर्वेपि प्राञ्चो ग्रन्थकाराः मङ्गळस्य ग्रन्थे संयोजनं शिष्य शिक्षार्थमित्याहुः । अयं तु मङ्गळस्य शिष्यशिक्षार्थत्वं कथयति । मङ्गळा वरणमात्रेण शिष्याणां हृदयेष्वस्माभिरपि ग्रन्थारम्भे मङ्गळाचरणं कर्तव्य मेति बुद्धिः कथमुत्पद्येत? गुरुणा मङ्गळं कृतमित्येव शिष्यैः कथं ज्ञायेत? येन ते गुरुणा कृतमित्यस्माभिरपि कर्तव्यमिति जानीयुः । अत एव ग्रन्थे-नाऽसंयोजितं मङ्गळं शिष्यशिक्षायै न कल्पत इति मङ्गळस्य ग्रन्थेन संयोजनमेव शिष्यशिक्षार्थं भवतीति ग्रन्थकृतः प्राहुः ।

एतेन - "एवं हि पक्षद्वयमेवात्र सम्प्राप्तम्— मङ्गळपरिवर्जनं तत्परिरक्षणं वा; तयोरन्यतर एव पक्षोऽत्र समाश्रय णीयः । तत्र द्वितीयपक्षाङ्गीकारेण श्रीभाष्यं श्रीटीका भवतीत्यतो भाष्यकळेबरान्मङ्गळस्यैव परिवर्जनं साधीय इति मन्यामहे ।”

इति परास्तम् । स्मृत्याचारसिद्धमङ्गळाचरणावश्यकतायास्तद्घटितस्यापि ग्रन्थस्य भाष्यलक्षणलक्षितत्वाक्षतेश्च निरूपितत्वात् ।

यदपि— “ एतेनैव 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं

पूर्वाचार्यास्संचिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्त' इति वाक्यद्वयस्यापि प्रत्याख्यानं व्याख्यातमेव, शिष्टाचारसिद्धत्वान्मङ्गळस्य तन्निवेशने तावदनुकूलतर्कसद्भावः कथमपि कल्पयितुं शक्यते । अत्रपुनरनुगुणा युक्तिः काचिदपि न दृश्यते, प्रतिज्ञारूपत्वाद्वाक्यद्वयस्येति तयोरपि परिवर्जनमवस्थितमेव । अपि चैतेन विशिष्टाद्वैतभाष्यं खलु बोधायनवृत्तिवद्वृत्तिरूपं, न तु पुनर्भाष्यमेव (यथाबहूनांसम्मतं) इत्यनतिदुर्बला नवीना काचिच्छङ्केह निरर्गळमवकाशते ।" इति - ;

अत्र वदामः "भगवद्बोधायने" त्यादिवाक्यद्वयेन श्रीभाष्यस्य भाष्यान्तरेभ्यो वैलक्षण्यम्, नवीनग्रन्थनिर्माणप्रयोजनं च प्रतिपाद्यत इति स्पष्टम् । तदिदं प्रेक्षावत्प्रवृत्तिहेतुभूतं ग्रन्थादावावश्यकमेव । ब्रह्मसूत्रकारस्य भगवतो वेदव्यासस्य साक्षाच्छिष्यप्रशिष्यत्वाद्बोधायनस्य तत्प्रणीताया वृत्तेस्सूत्रकृदाशयाविष्कारपटीयस्त्वं तदनुसारितयाऽस्य भाष्यस्य भाष्यान्तरेभ्यो वैलक्षण्यं प्रतिपाद्यमानं प्रेक्षावतां प्ररोचनाय भवतीति तत्प्रवृत्त्युपयोगि, वृत्तिग्रन्थद्रमिडभाष्यादीनामतिविस्तृतातिसंक्षिप्तत्वकथनमुखेनाद्यतनानाम - कार्यकरत्वप्रतिपादनात् तत्परित्यागेन भाष्याध्ययने प्रेक्षावतां प्रवृत्तौ तदप्युपयोगि । प्रेक्षावत्प्रवृत्त्युपयोगिविषयप्रयोजनादिकथनवदिदमपि ग्रन्थादावावश्यकमेव । "अथ शब्दानुशासम्" इत्यादेर्महाभाष्यग्रन्थभागस्य प्रयोजनप्रदर्शनंपरत्वं व्याख्याकारैरुक्तम् । तस्य च महाभाष्यान्तर्गतत्वं सर्वसम्मतम्, तद्वदस्यापि वाक्यद्वयस्य भविष्यति । प्रतिज्ञावाक्यसामान्यस्य भाष्यबहिर्भावाङ्गीकारे, "यथा चायमर्थस्सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः" इत्यादिशाङ्करभाष्यवाक्यानामपि तथात्वप्रसङ्गोऽपरिहार्यः ।

अत्र " तत्र श्रीमद्भगवद्गीताभाष्ये खलु अद्वैताचार्यभगवत्पादैरपि—

अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ '

इति मङ्गळमुपक्षिप्तम्, तथाच 'स भगवान् सृष्ट्वेदं जगदि' त्यादिनोपोद्घातश्च भाष्याङ्गतया विनियोजित इति कथं न भाष्यस्य वैयर्थ्यापत्तिरितिचेदुच्यते, नायं दोषः । सूत्रभाष्य एव सूत्रानुसारि पदैर्भाष्यकृता सूत्रार्थवर्णनम्, स्वकृतसङ्ग्रहवाक्यानां च विभाग वर्णनं कर्तव्यम्, न त्वन्यत्र । अत एव श्रीमद्भगवद्गीताभाष्ये वैदिक संहितोपनिषदादीनां च भाष्य मङ्गळोपोद्घातादिकं न दोषायेति तत्र मङ्गळं क्षोदक्षममिति मन्यामहे । तथा च श्रीमद्भगवद्गीताभाष्ये 'नारायणः परो व्यक्ता'दिति श्लोको न मङ्गळरूपः, तच्छास्त्रप्रतिपादितभगवत्स्वरूपवर्णनार्थमेव प्रयुक्तत्वात् । अध्यास भाष्यवच्छारीरकभाष्यस्योपोद्घातश्चापि गीतानां सारसंक्षेप इति कृत्वा तस्य प्रामाण्यं सर्वथा यथापूर्वमव्याहतमेवेत्याशयो द्वैतिनामिति प्रकृतं विषयमुपसंहरामः । "— इति ;

अत्र चायं मङ्गळस्य भाष्यलक्षणरहितत्वेन भाष्याघटकत्वे श्रीमच्छाङ्करभगवद्गीताभाष्ये "नारायणः परोव्यक्तादि" त्यादिग्रन्थस्य मङ्गळरूपस्य कथं तद्भाष्यघटकत्वमित्याशङ्क्य 'सूत्रार्थो वर्ण्यत' इत्यादि भाष्यलक्षणस्य सूत्रभाष्यमात्रविषयत्वाद्भगवद्गीताभाष्यघटकभागस्य तादृश लक्षणशून्यत्वेपि न दोष इति समाधानमुक्त्वा, समाधानान्तरमपि कथयितुं प्रवृत्तो 'नारायण' इत्यादिश्लोको न मङ्गळरूपः— अपि तु तच्छास्त्रप्रतिपाद्यार्थसारसंक्षेपरूपः, यथा शारीरकभाष्यस्याध्यासभाष्यम् इति लिखतीव ।

अत्र वदामः—; "सूत्रार्थो वर्ण्यत" इत्यादिलक्षणं सूत्रपदघटित त्वात् सत्यं सूत्रभाष्याणामेवेति प्रथमं समाधानं युक्तमेव । "न मङ्गळरूप" इत्यादिद्वितीयसमाधानं तु न युक्तम्, शास्त्रप्रतिपाद्यभगवत्स्वरूपवर्णन परत्वेपि मङ्गळरूपतायां बाधकाभावात् । "अण्डस्यान्तस्त्विमे लोका"

इत्यादिभागस्तु न शास्त्रप्रतिपाद्यार्थसंक्षेपरूपः, तस्यार्थस्य भगवद्गीतायां प्रतिपादनादर्शनात् । अण्डमध्ये चतुर्दशानां लोकानां सत्त्वं सप्तद्वीपाया भूमेस्तत्र वर्तमानत्वं च भगवद्गीतायां कुत्राप्यध्याये प्रतिपाद्यमानं न दृश्यते। तस्मात्तस्य सारसंक्षेपरूपत्वाद्भाष्यान्तर्गतत्वमिति समाधानं अयुक्तम् । अध्यासभाष्यस्य उपोद्घातरूपस्य शास्त्रार्थसारसंक्षेपरूपत्वाद्भाष्यान्तर्गतत्व मिति लिखन्नयं **अखिले**त्यादिश्लोकद्वयस्य पूर्वोक्तं शास्त्रार्थसारसंक्षेपरूपस्य भाष्यान्तर्गतत्वं कुतो नानुमन्यत इति न जानीमः । ब्रह्मणो जगज्जन्मादि कारणत्व **मखिले**त्यादिना "फलमत उपपत्ते" रित्यादिशास्त्रार्थो **विनते** त्यादिना "शास्त्रयोनित्वादि" त्यादिशास्त्रार्थः **श्रुतिशिरसी** त्यादिना साध नाध्यायार्थः **शेमुषी भक्तिरूपे**त्यादिना च प्रतिपाद्यत इति स्पष्टम् । द्वितीय श्लोके **संसाराग्नी** त्यादिना फलस्वरूपं प्रतिपाद्यत इत्यपि स्फुटम् । अध्यास भाष्यं यद्युपोद्घातरूपतया भाष्यान्तर्भावमर्हति, तर्हि "**भगवद्बोधायने**" त्यादिग्रन्थेनोपोद्घातरूपेण किमपराद्धम् । किंच सूत्रभाष्य एव मङ्गळं न कर्तव्यम् , गीताभाष्ये कर्तुं शक्यत इति " नारायणः परोऽव्यक्तादि" ति मङ्गळाचरणं न दोषायेति वदन्नयं भगवच्छङ्कराचार्यस्य जीवन्मुक्तत्वं विघ्न रहितत्वं वा नाभ्युपगच्छतीत्यनुमीयते । अन्यथा तु भगवतो रामानुजस्य जीवन्मुक्तत्वाद्विघ्नाभावात्सङ्कल्पमात्रादेव सर्वकार्यसाधनसामर्थ्याच्च मङ्गळा-चरण मनुचितमित्याद्याक्षेपास्सर्वेऽपि कृत्यावदस्यैव शिरसि नूनं पतेयुः ।

## पूर्ववृत्तविचारः ।

यदाहायम्—" अथात्रावसरप्राप्तं जिज्ञासाधिकरणस्य किं विशिष्टा द्वैत एव परमतात्पर्यमुताद्वैत इति विषयमवलम्ब्य किञ्चिदिह लेखनीं व्यापारयामः । तदर्थं श्रीभाष्यमेव प्रथममनुसरामः ।" इति,

इदमस्य प्रतिज्ञामात्रमिति मन्यामहे । यत उपरितनेऽस्य लेखे कुत्रापि विशिष्टाद्वैताद्वैतविचारस्य नाममात्रमपि न दृश्यते । अस्ति तु पूर्ववृत्त

विचारमात्रमुत्तरत्र । न हि कर्मविचारस्य ब्रह्मविचारः पूर्ववृत्तं वा साधन चतुष्टयं वेति विचार एवाद्वैतविशिष्टाद्वैतविचारो भवति ?

अथ यदाहायम् "जिज्ञासाधिकरण उपक्रमपङ्क्तयस्तावत् 'अत्रा यमथशब्द आनन्तर्ये भवति, अतश्शब्दो वृत्तस्य हेतुभावे। अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ' ति । अत्र खलु 'अधीतसाङ्गसशिरस्के ' त्यादिना ब्रह्मजिज्ञासायास्स्वाध्यायानन्तर्यं सामान्यतः परिसूच्यते । ' अधिगताल्पास्थिरफलकेवलकर्मज्ञाने ' त्यादिना नित्यानित्यवस्तुविवेक रूपसाधनानन्तर्यमुपदिश्यते । नित्यानित्यवस्तुनोर्विवेकेनैव इहामुत्रार्थभोगविरागस्समुत्पद्यते । ततो मुमुक्षुत्वम् । एतदपि पुनः ' संजातमोक्षाभिलाषस्ये ' ति पदेन गतार्थं भवति " इति ।

अत्र ब्रूमः— "अधीतसाङ्गसशिरस्कवेदस्य " इत्यादिना ब्रह्मजिज्ञासाप्रवृत्तिक्रमः प्रदर्श्यते। स्वाध्यायानन्तर्यस्य ब्रह्मजिज्ञासायां वर्तमानत्वेपि तत्प्रदर्शनार्थमस्य वाक्यस्य प्रवृत्तिः ।

" अधिगताल्पास्थिरफलकेवलकर्मज्ञानतये " त्यादिनाऽद्वैत्यङ्गीकृत प्रवृत्तेषु नित्यानित्य वस्तु विवेक रूपं पूर्ववृत्तं प्रतिपाद्यत इति कथनं तु परिहास्यम् । साङ्गसशिरस्कवेदाध्ययनेन कर्मणो ब्रह्मज्ञानस्यचानन्ताक्षयफलवत्त्वापातप्रतीतौ तन्निर्णयार्थं प्रथमतः कर्मविचारे प्रवृत्तस्य पुरुषस्य कर्माल्पास्थिरफलत्वनिर्णये जातेऽवशिष्टब्रह्मज्ञानानन्ताक्षयफलत्वनिर्णयार्थं ब्रह्मविचारे स्वभावत एव प्रवृत्तिर्भवतीति तस्य वाक्यस्याभिप्रायः । तत्र नित्यानित्यवस्तुविवेकस्य का वा प्रसक्तिः । नित्यानित्यवस्तुविवेको नाम यन्नित्यं तत्सुखं यदनित्यं तन्न सुखमिति नित्यानित्ययो-स्सत्यासत्ययोस्सुखदुःखत्वनिश्चयः । एतादृशो निश्चयो हि न

कर्मविचारेण भवितुमर्हति, कर्मस्वरूपज्ञानं तन्मूलकमनित्याल्पफलकत्वज्ञानं च कर्मविचारेण भवितुमर्हति ।तदेव च " अधिगताल्पास्थिरफलकेवलकर्म ज्ञानतये " ति वाक्येनोच्यते ।

यद्यपि भगवता शङ्कराचार्येण नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयं पूर्ववृत्तमुक्तम् । तत्र नित्यानित्यवस्तुविवेक इति शब्दस्वरूपपर्यालोचने नित्यानित्ययोर्वस्तुनोर्विवेको विविक्ततया ज्ञानमेवार्थस्स्वरसतो लभ्यते । नित्यः प्रत्यागात्मा, अनित्या देहेन्द्रियविषयादयः । तद्विषयकं विविक्ततया ज्ञानं—इहामुत्रफलभोगविरागं प्रति हेतुश्च भवति । अथापि ब्रह्मविचारात्पूर्वमेता दृशस्य ज्ञानस्यासम्भवात्तस्य पूर्ववृत्तत्वानुपपत्तिं पर्यालोच्य व्याख्याकारै र्नित्यानित्यवस्तुविवेकशब्दस्य नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु-नित्यानित्यवस्तुधर्मः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तु विवेक इत्यर्थोऽङ्गीकृतः । स्पष्टं चेदं भामत्याम् । एतादृशो निश्चयश्च साङ्गाध्ययनवतश्शुद्धान्तःकरणस्य भवतीति परिमळकारः । कर्मणोऽल्पास्थिर फलत्वनिश्चयस्तु न पूर्वोक्तनित्यानित्यवस्तुविवेकरूप इति तु स्पष्टम् ।

किञ्च— "नित्यानित्यवस्तुनोर्विवेकेनैव इहामुत्रार्थभोगविरागस्समुत्पत्स्यत" इति लिखन्नयं महाशयो नित्यानित्ययोर्वस्तुनोर्विवेक इति व्युत्पत्ति माभिप्रैतीव । सा च भामत्यादिविरुद्धाऽनुपपन्ना चेति स्पष्टं विदुषाम् ।

एतेन " नित्यानित्यवस्तुनोर्विवेकेन" इत्यारभ्य ' गतार्थं भवती " त्यन्तं परास्तम् । " अधिगताल्पास्थिरफलकेवलकर्मज्ञानतये " त्यादि भाष्यवाक्यस्य पराभिमतनित्यानित्यवस्तुविवेकपरत्वासम्भवस्य पूर्वमुक्तत्वात् , तन्मूलकस्येहामुत्रार्थभोगविरागस्य पूर्ववृत्ततायास्तद्भाष्याभिप्रेतत्वस्य सुतरामसम्भवात् । मुमुक्षुत्वमात्रं ब्रह्मविचारप्रवृत्तावपेक्षितमपि न ब्रह्म विचारपूर्ववृत्ततयाऽथशब्दविवक्षितत्वमिति स्पष्टं भाष्यवेदिनाम् । अथशब्दस्य प्रक्रान्तक्रियानन्तर्यवाचित्वेन प्रक्रान्तत्वस्य च स्वपूर्ववाक्यस्थधातु तात्पर्यविषयत्वरूपतया मुमुक्षुत्वस्य तथात्वाभावेनाऽथशब्दार्थान्तर्गतत्वा

यदप्ययमाह—

"अथेदानीमद्वैतभाष्यं पर्यालोच्यते चेत्तत्रापि अथातश्शब्दयोर्व्याख्यानं समानमेव । तथा हि 'तत्राऽथशब्द आनन्तर्यार्थः परिगृह्यते.... .... स्वाध्यायानन्तर्यं तु समानम् । तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति, उच्यते— नित्यानित्यवस्तुविवेकः,— इहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं च । — — तस्मादथशब्देन यथोक्तसाधन सम्पत्त्यानन्तर्यमुपदिश्यते । अतश्शब्दो हेत्वर्थः" इति । अथशब्द उभयत्रैवानन्तर्याभिधेयवचनः, तत्र हि अद्वैतभाष्यस्य साधनचतुष्टयानन्तर्यमेवाभिप्रायः । विशिष्टाद्वैतभाष्यस्यापि तथेति प्रतीयते। अद्वैतभाष्ये खलु साधनचतुष्टयी कण्ठोक्ता निरूपिता । विशिष्टाद्वैतभाष्ये पुनरिहामुत्रार्थभोगविरागः, शमदमादिसाधनसम्पच्चेति साधनद्वयं शब्दतो न निरूपितम्, किन्तु अर्थादेव । एवं हि अथातश्शब्दव्याख्याने श्रीभाष्यस्य न कोपि तादृशो विशिष्टविशेषः प्रतीयते।"

इति ।

अत्र ब्रूमः— उभयोर्भाष्ययोरथशब्दस्यानन्तर्यार्थकत्वमङ्गीकृतमिति सत्यम्, परं त्वद्वैतभाष्यकाराभिप्रायेण साधनचतुष्टयानन्तर्यमथशब्दार्थः, विशिष्टाद्वैतभाष्यकाराभिप्रायेण कर्मविचारानन्तर्यमथशब्दार्थ इत्ययमेको विशेषः । 'चैत्रेण पच्यते अथ भुज्यत' इत्याद्यनुसारेणाथशब्दस्य प्रक्रान्तक्रियानन्तर्ये शक्तेस्तान्त्रिकैरङ्गीकृतत्वेन, शाङ्करपक्षे प्रक्रान्तक्रियाया अभावेनाऽथशब्दस्य लाक्षणिकता, श्रीभाष्यकारपक्षे तस्य मुख्यार्थतेत्यपरो विशेषः "अधिगताल्पास्थिरफलकेवलकर्मज्ञानतये" त्यादिवाक्येन नित्यानित्यवस्तुविवेकस्सूच्यत इति लेखकस्य कथनं तु पूर्वमेवास्माभिर्निराकृतम् । एवमतश्शब्दोपि शाङ्करपक्षे लाक्षणिकः । प्रकृतपरामर्शिनोऽतश्शब्दस्य "तद्यथेह कर्मचितो लोकः क्षीयते" इत्यादि

परामर्शितत्वस्य मुख्यत्वासम्भवात्; स्यतो वेद एवाग्निहोत्रादीनां श्रेयस्सा धनानामनित्यफलतां दर्शयति—'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवा मुत्र पुण्यचितो लोकः क्षीयत' इत्यादिः, तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति "ब्रह्मविदाप्नोति परम्" इत्यादिः, "तस्मात्" इति ह्यतश्शब्दव्याख्यानरूपं शाङ्करभाष्यम्। यत्तु भामत्यां "अत्र च ब्रह्म पदेन तत्प्रमाणं वेद उपस्थापितः। स च योग्यत्वात् 'तद्यथेह कर्मचितः' इत्यादिः अत इति सर्वनाम्ना परामृश्य हेतुपञ्चम्या निर्दिश्यत" इति वेदस्य बुद्धिस्थत्वसम्पादनप्रयत्नः कृतः; स तु विफल एव, परब्रह्मवाचिना ब्रह्म शब्देन तत्प्रमाणभूतवेदस्य कथमुपस्थापनम्? न हि ब्रह्मस्मरणमात्रेण तत्प्र माणभूतो वेदस्स्मृतो भवति। एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन हि ब्रह्मशब्देन वेदोपस्थापनमभिप्रेतम्। प्रमाणप्रमेयभावसम्बन्धस्य स्मारकसम्बन्धत्वाङ्गीकारासम्भवात्। अन्यथा वेदप्रमाणकानामलौकिकाना मर्थानां मध्ये कस्यापि पदार्थस्य स्मरणे सति वेदस्य स्मरणप्रसङ्गात्। न च सूत्रे ब्रह्मशब्दो वेदवाची। श्रीभाष्यकारपक्षे त्वतश्शब्दो मुख्यार्थः, अथशब्दार्थानन्तर्यस्यैव हेतुतया तेन परामर्शात्, आनन्तर्य स्य चाव्यवहितपूर्वप्रकृतत्वात्; तस्मादयमपि श्रीभाष्यस्य विशेष इति मन्त व्यम्।

यदुच्यते 'तदेतद्रामानुजमतानुसारिणः प्रतिक्षिपन्ति। तथाहि— इयं नाम विशिष्टता विशिष्टाद्वैतभाष्यस्य यद्विशिष्टाद्वैतमते कर्मस्व रूपज्ञानविशिष्टकर्मफलानित्यत्वज्ञानं ब्रह्मविचारसाधनम्। अद्वैत मते तु कर्मफलानित्यत्वज्ञानमेव तद्घटकमिति। इदमेवात्रालोचनी यम्। कर्मस्वरूपविचारोपि ब्रह्मविचार पूर्ववृत्त इति विशिष्टाद्वैत भाष्यसिद्धान्तः किमस्ति सूत्रारूढ इति। तत्रादावयमेव प्रश्नो भवितुमर्हति— कुत्रनामाल्पास्थिरफलवत्कर्मस्वरूपविचार उपवर्ण्यत इति। न तावज्जैमिनीये कर्मविचारः; तत्र हि कर्मस्वरूपमेव विचार्यते न तु पुनः कर्मफलानां नित्यत्वानित्यत्वादिकमपि। तद्धि ब्रह्ममीमां

सायास्तृतीयाध्यायचतुर्थपादेन खलु विचार्यते। यदितावद्ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादप्रतिपादितमेव साधनमथातोब्रह्मजिज्ञासेत्यत्राथशब्दार्थानन्तर्यप्रतियोगितया विवक्षणीयम्, तर्हि इयमेका महती शङ्का समुन्मिषति, यत्कथंनाम कर्मस्वरूपविचारो ब्रह्मविचारसाधनतयाऽथशब्दार्थविवरणावसरे विवक्षितुं शक्यत इति। विदितमेवेदं सर्वेषां यज्जैमिनीयकर्मविचारो द्वादशलक्षणरूपो ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादे तदनन्तरं वा न वर्तत इति। अतोत्रेदं वक्तव्यम् यज्जैमिनीयकर्मविचारोपि ब्रह्ममीमांसातृतीयाध्याय चतुर्थपादेन कथञ्चन सङ्गच्छत इति श्रीभाष्यकाराशय इति। युक्तं च तत्, अत एवोक्तं श्रुतप्रकाशिकायां– 'अर्थक्रमाद्ब्रह्ममीमांसा तृतीयलक्षणचतुर्थपादेन कर्मविचारस्सङ्गतः। प्रतिपत्तिसौकर्य लक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव' इति। स्पष्टमिदं गमयति श्रुतप्रकाशिकाविवरणं, यदथातोब्रह्मजिज्ञासेति प्राथमिकी प्रतिज्ञा। अथातो धर्मजिज्ञासेत्यादिकं तु ब्रह्ममीमांसातृतीयाध्यायचतुर्थपाद शेषतामेतीति। तदिदं सिद्धम्– यज्जैमिनीयकर्मविचारोपि तृतीयाध्याय चतुर्थपादशेषत्वात् साधनाध्यायगम्य इति ब्रह्मविचारपूर्वतन इति श्रीभाष्यमतं युक्तमेवेति।"— इति।

अत्रोच्यते— जैमिनीयकर्मविचारशास्त्रे कर्मफलानां नित्यत्वानित्यत्वादिकं न विचार्यते, कर्मस्वरूपमेव विचार्यते, तस्मात्कर्मविचारेण कर्मणामल्पास्थिरफलत्वज्ञानं कथं सम्भवतीति पूर्वपक्षी प्रत्यवतिष्ठते। आवृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वं सिध्यतीति वयं ब्रूमः, न त्वल्पास्थिरफलत्वविचारः कर्ममीमांसाशास्त्रे क्रियत इति। आवृत्तिविधानं तावत् "दाक्षायणयज्ञेन यजेत सुवर्गकामः" इति श्रूयते। अत्र च दाक्षायणयज्ञनामकं किमपि स्वतन्त्रं कर्म विधीयते वा? दर्शपूर्णमास एव गुणो विधीयते वेति विचार्य, आवृत्तिरूपगुणो विधीयत

...पूर्णमासादीनाम्। आवृत्तानावृत्तकर्मणोर्गौरवलाघवाभ्यां फले तारतम्यं च ''फलस्य कर्मनिष्पत्तेः तेषां लोकवत्परिमाणतः फलविशेषस्स्यात् '' इत्यर्थवादाधिकरणोक्तरीत्या सिध्यति। अनेन न्यायेन कर्मफलानां न्यूनाधिकभावसिध्याऽल्पास्थिरत्वादिसिद्धिः। एवं गुरुलघुभूतानां दर्शपूर्णमासज्योतिष्टोमवाजपेयाग्निहोत्रप्रभृतीनां कर्मणां स्वर्गः फलत्वेन श्रूयते। कर्मगौरवलाघवानुसारेण स्वर्गे तारतम्यमावश्यकम्। तत्र च कर्मभेदाङ्गविनियोगप्रयुक्त्यतिदेशादिभिरग्निहोत्रदर्शपूर्णमासज्योतिष्टोमवाजपेयादीनां गौरवलाघवसिद्धिः।

एवं पूर्वमीमांसागतैर्बहुभिर्न्यायैः कर्मणामनित्यत्वज्ञानं भवतीति बोध्यम्।

यत्तु– कर्मफलानां नित्यानित्यत्वविचारो ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादे क्रियत इत्ययमाह; तन्न, तत्र पादे तद्विचारादर्शनात्। शङ्करभाष्यानुसारेण तस्मिन्पादे सप्तदशाधिकरणानि भवन्ति। प्रथमाधिकरणे किमात्मज्ञानं क्रत्वर्थमुत पुरुषार्थमिति विचारः। स्वतन्त्रतया पुरुषार्थसाधनं भवतीति पुरुषार्थमिति सिद्धान्तः। द्वितीयाधिकरणे ऊर्ध्वरेतसामप्याश्रमित्वं साधितम्। तृतीयाधिकरणे '' स एष रसानां रसतम'' इत्यादिश्रुतीनामुपासनविध्यर्थत्वं स्थापितम्। चतुर्थे आख्यानानां पारिप्लवार्थत्वं निरस्य सन्निहितविद्यांप्रतिपत्त्युपयोगित्वं साधितम्। पञ्चमे– विद्याया अग्नीन्धनाद्यनपेक्षत्वमुक्तम्। षष्ठे— विद्याया उत्पत्तौ सर्वाश्रमकर्मापेक्षोक्ता। सप्तमे— 'न ह वा एवंविदि किञ्चनानन्नं भवती'' त्यादीनामर्थवादत्वं स्थापितम्। अष्टमे चाश्रममात्रनिष्ठस्यापि नित्यकर्माणि कर्तव्यान्येवेति साधितम्। नवमे विधुरादीनामपि ब्रह्मविद्यायामधिकारस्समर्थितः। दशमे— प्रतिपन्नोर्ध्वरेतोभावस्य न पुनः पूर्वाश्रमं प्रति निवृत्तिस्सम्भवतीत्युक्तम्। एकादशे नैष्ठिकस्यावकीर्णितायां प्रायश्चित्तं नास्तीत्युक्तम्। द्वादशे चोर्ध्वरेतसां स्वाश्रमेभ्यः च्युतानां बहिष्कार उक्तः। त्रयोदशे चाङ्गोपासनानामृत्विक्कर्मत्वं स्थापितम्।

बाल्यं धार्मिकत्वाद्यनाविष्करणरूपमिति स्थापितम्। षोडशे— प्रतिबन्धकाभावे त्विहैव विद्योत्पद्यते, तत्सत्त्वे त्वमुत्रेत्युक्तम्। सप्तदशे मुक्तिरूपे फले उत्कर्षापकर्षकृतः कोपि प्रतिनियमो नास्तीत्युक्तम्। तदेवं पादे तस्मिन् कुत्राप्यधिकरणे कर्मफलनित्यत्वानित्यत्वविचारो नास्त्येव।

एतेन—"यदितावदि" त्यारभ्य "न वर्तत' इत्यन्तं निरस्तम्, पूर्वमीमांसायां कर्मफलाल्पास्थिरत्वसिद्धेरस्माभिर्निरूपितत्वात्।

यत्तु "अतोत्रेदं वक्तव्य" मित्यादिना कर्मविचारस्य ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादेन सङ्गतेः श्रीभाष्यकाराभिप्रेतत्ववर्णनम्, तदिष्टमेवास्माकम्, पक्षविशेषे तथा निर्वाहस्यापि प्राचीनैराचार्यैः कृतत्वात। श्रुतप्रकाशिकायां कर्मब्रह्मविचारयोरेकशास्त्रत्वे प्रथममुभयभागसाधारणप्रतिज्ञाया एव कर्तव्यत्वात्कथं "अथातो धर्मजिज्ञासे" ति पूर्वभागमात्रसाधारणप्रतिज्ञा कृतेत्याशङ्क्य तत्समाधानतया त्रयः पक्षाउक्ताः। तत्र—अथातो ब्रह्मजिज्ञासेत्येवोभयभागसाधारणप्रतिज्ञा। कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन सङ्गतः। ब्रह्मविचारान्तर्भावेपि कर्मविचारस्य पृथक्करणमुपपद्यते,— यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः। पृथक्करणं तु बहुग्रन्थप्रतिपाद्यत्वात्। तत्र च पूर्वभावित्वमुपजीव्योपजीवकभावादिनिबन्धन मिति प्रथमः पक्षः।

एवं कर्मविचारस्य तृतीयलक्षणचतुर्थपादेन सङ्गतिसत्त्वेपि पूर्वभावित्वं प्रतिपत्तिसौकर्यलक्षणक्रमाद्भवति। अयमेवार्थः श्रुतप्रकाशिकाकारैः "अर्थक्रमादि" त्यादिग्रन्थेन वर्णितः। न चैतावता कर्मविचारपूर्ववृत्तत्वं परित्यक्तमिति भवति। कृत्स्नं मीमांसाशास्त्रमेकम्, तत्र कर्मविचारो ब्रह्मविचारश्चेति भागद्वयम्। कर्मविचारकरणानन्तरमेव च ब्रह्मविचारे पुरुषस्य स्वाभाविकी

प्रवृत्तिर्भवतीति तस्य पूर्ववृत्तत्वम् । सङ्गतिर्हि अनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मृतिप्रयोजकसम्बन्धः । कर्मविचारशारीरकतृतीयाध्यायचतुर्थपादयोस्सङ्गतिस्समानविषयत्वात् , कर्मविचारप्रतिपादितक्रत्वङ्गभूतोद्गीथादिविचारः खलु शारीरकतृतीयाध्यायचतुर्थपादे क्रियते । ब्रह्मविद्यायाः कर्माङ्गत्वं न वेति विचारः, ब्रह्मविद्याया गृहस्थेषु सर्वकर्मापेक्षत्वम्, अब्रह्मविद्यानिष्ठानामपि कर्मावश्यकत्वम्, उद्गीथाद्युपासनानामृत्विक्कर्तृकत्वम्, इत्यादिकं तस्मिन्पादे चिन्तितम । कर्मस्वरूपादिविचारानन्तरमेव तेषां विचारः कर्तव्यतया प्राप्तः , कर्मविचारशेषत्वादस्य विचारस्य, अथापि ब्रह्मज्ञानं विना ब्रह्मदृष्ट्योपासनस्य विचारे कृते बोधो न भवितुमर्हतीति ब्रह्मस्वरूपादिनिरूपणानन्तरं तृतीयाध्यायचतुर्थपादे कृतमुद्गीथाद्युपासननिरूपणम् । प्रतिपत्तिसौकर्यमत्र बहुधा विवक्षितम् । ब्रह्मविचारो हि कर्मविचारोक्तकृत्स्नन्यायसापेक्षः , तदुक्तन्यायानुपजीव्यैवात्र ब्रह्मविचारस्य कृतत्वात्, ततश्च कर्मविचारसापेक्षत्वं ब्रह्मविचारस्य कर्मविचारस्य पूर्वभावित्वं च स्पष्टम् , कर्मविचारोक्तन्यायपरिज्ञानमन्तरा ब्रह्मविचारोक्तार्थप्रतिपत्तेरसम्भवात् । एवं ब्रह्मज्ञानं प्रतिबन्धकपापनिरसनेन भवति, तच्चानभिसंहितफलेनानुष्ठितेन कर्मणा।तदर्थं कर्मस्वरूपादिनिश्चयोऽपेक्षितः , स च कर्मविचारजन्य इति कर्मविचारस्य पूर्वभावित्वं तत्सापेक्षत्वं ब्रह्मविचारस्य । एवं शारीरकतृतीयाध्यायचतुर्थपादे क्रियमाण उद्गीथाद्युपासनादिविचारश्च कर्मस्वरूपज्ञानसापेक्ष इति कर्मविचारस्य पूर्वभावित्वम्। कर्मविचारेण कर्मस्वरूपादिनिश्चये जात एव ब्रह्मविचारोक्तार्थप्रतिपत्तिस्सुखेन भवितुमर्हतीति प्रतिपत्तिसौकर्यलक्षणक्रमात्कर्मविचारस्य ब्रह्मविचारपूर्वभावित्वमिति तात्पर्यम् ।

> यदपि—" इदमेकमस्वारस्यं सर्वेषां पुरतः स्फुरति ; यत्सर्वोऽपि जैमिनीयकर्मविचारः कथं वा ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादशेषतां नेय इति "—इति ।

र्मापेक्षत्वम्, अब्रह्मविद्यानिष्ठानामप्याश्रमकर्मानुष्ठानस्यावश्यकत्वम्, कर्मसमृद्ध्यर्थानि कर्माङ्गाश्रयभूतोद्गीथाद्युपासनानि, एवमन्यदन्यच्च विचारितमस्ति। कर्मस्वरूप–तत्फल–तदितिकर्तव्यताद्यज्ञाने किं कर्मापेक्षितम्? किञ्च न, कथं च तत्कर्तव्यम्? कानि पुनस्तदङ्गानीत्यादिनिश्चयो न भवितुमर्हति। जैमिनीयं द्वादशलक्षणात्मकं शास्त्रं प्रमाणलक्षणमारभ्य समाप्तिपर्यन्तं सङ्गतिक्रमादिविशिष्टम्। पूर्णतया तदध्ययनेनैव च कर्मस्वरूपादिनिश्चयः पूर्णो भवतीति कृत्स्नस्यापि कर्मविचारस्यापेक्षास्त्येव,– इतिशारीरकतृतीयचतुर्थपादशेषत्वं स्पष्टमिति न किमप्यस्वारस्यमिति।

यदपि "अपरं चेदमस्वारस्यं यद्गृहस्थानां कर्मविचारानन्तरं ब्रह्मविचारः, नैष्ठिकादीनां शमदमाद्यनन्तरमेव ब्रह्मविचार इति सर्वेषामधिकारिणामेकं साधनं न नियम्यत इति।"––इति;

अत्र ब्रूमः। यथा गृहस्थानामग्निहोत्रादिकर्माणि अनुष्ठेयानि ब्रह्मविद्यानिष्ठानाम् तथैव नैष्ठिकादीनामपि तदाश्रमोचितकर्माण्यनुष्ठेयान्येव ब्रह्मविद्याङ्गतया, न खलु नैष्ठिकादीनां ब्रह्मविद्या कर्मसामान्यनिरपेक्षेत्युक्तं कुत्रापि, "अत एव चाग्नीन्धनाद्यनपेक्षा" इति सूत्रे हि अग्न्याधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षैव प्रोक्ता, न तु कर्मसामान्यानपेक्षा। तत्र ह्येवं भाष्यम्––"तेषु विद्या केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः" इति। अत एव हि सूत्रकारः "अग्नीन्धनाद्यनपेक्षा" इत्याह, न तु सर्वकर्मानपेक्षेति। एतावता नैष्ठिकादीनां कर्मविचारानावश्यकता न सिद्ध्यति। नैष्ठिकादीनामपि कर्मविचारापेक्षाऽस्त्येव। येषां पक्षे स्वाध्यायाध्ययनविधिरर्थज्ञानपर्यन्तस्तेषां कर्मविचारस्सर्वेषामेवाधीतवेदानां प्राप्तः। शमादिसम्पत्तिरपि मीमांसाश्रवणसापेक्षेति निरूपितं भा-

व्यक्तैव । “ अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवण मन्तरेण न सम्पत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चया दृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोध-त्वात् ” इति । तदेवं द्वेधापि नैष्ठिकादीनामपि कर्मविचारापेक्षायां सर्वेषा मेवाधिकारिणां कर्मविचारानन्तरमेव ब्रह्मविचारप्राप्तिः ।

एतेन– “अत्रानुसन्धेयानि श्रीभाष्यवाक्यानीमान्येव ” इत्यारभ्य स्वोक्तार्थे श्रीभाष्यग्रन्थगतानां केषाञ्चिद्वाक्यानां प्रमाणतयोद्धार स्समाहितः , उदाहृतवाक्यमध्य एव ‘ तेषु विद्या केवलस्वाश्रमविहित कर्मापेक्षा इत्यर्थः ’ इति वाक्यस्य नैष्ठिकादीनामपि स्वाश्रमविहितकर्मा वश्यकताप्रतिपादकस्य विद्यमानतया तद्भाष्यस्य एतदभीष्टार्थप्रमाणत्वासम्भ वात् । तेन विपरीतफलस्यैव च सिद्धेः ।

यदप्युक्तम्— “अपरं खल्वस्वारस्यमिदमेव– यद्देवताधिकरणे देव तानां ब्रह्मविचारेऽधिकारो यस्साधितः स (ब्रह्मविचारो) यदि जैमि नीयकर्मविचारानन्तरमेव कर्तव्य इति विवक्ष्यते, तर्हि देवतानां कर्मानधिकारप्रतिपादकमुत्तरमीमांसागतं देवताधिकरणं निरालम्बनं स्यात् , एतदुक्तं भवति । जैमिनीयकर्मविचारो हि ‘स्वाध्यायोऽध्ये तव्य’ इति विधिप्रयुक्तः, देवतानां वेदाध्ययनानधिकारिणां कथमपि नायं विधिःप्राप्त इति ब्रह्मविचारस्य जैमिनीयकर्मविचारानन्तर्यविव क्षायां उत्तरमीमांसागतं देवताधिकरणमत्यन्तमसङ्गतं स्यादिति” इति;

अत्र वदामः–शारीरके देवताधिकरणे देवतानां ब्रह्मविद्यास्वधिकारोऽस्ति न वेत्येव चिन्तितम् ; न तु ब्रह्मविचारेऽधिकारोस्ति न वेति । अन्या च ब्रह्मविद्या, अन्यश्च ब्रह्मविचारः। तथा च तत्रत्यं भाष्यम्, “तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवानामप्यधिकारोऽस्ति नास्तीति विचार्यत इति ।

तन्मूलकदु:खाभावाद्दु:खजिहासारूपार्थित्वं न सम्भवति, शरीराद्यभावा देव विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमपि न सम्भवतीति पूर्वपक्षयुक्तिः । देवादीनां शरीरादिसद्भावेनाध्यात्मिकादितापत्रयाभिघातेन तज्जिहासाया ब्रह्मणि निरस्तनिखिलदोषगन्धे समस्तकल्याण गुणाकरे भोग्यत्वज्ञानेन तत्प्राप्तीच्छायाश्च सम्भवेन चार्थित्वं सम्भवति , सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तायाश्शास्त्रसिद्धत्वेन सम्भवतीति सिद्धान्त युक्तयः । देवादीनामत्रैवर्णिकानामुपनयनाभावेनाध्ययनसिद्धस्वाध्यायलब्ध विद्यत्वाभावात् , विद्याङ्गभूतकर्मानुष्ठानयोग्यताभावाच्च कथं ब्रह्मविद्यास्वधिकार इति चेत्?;इदमत्र समाधानम्—उपनयनाभावेपि ब्रह्मोपासने यज्ञादिकर्मसु च देवादीनामधिकारस्सम्भवति , उपनयनस्य वेदाध्ययनाङ्गत्वेपि ब्रह्मविद्याय ज्ञादिकर्मणोरङ्गत्वाभावात् ; अध्ययनाभावेपि देवादीनां पूर्वजन्मविशेषाधीत स्वाध्यायतदर्थस्मरणयोस्सुकृतविशेषेण सम्भवात् ; शूद्रादीनामिव देवा-दीनां विद्याकर्मणोरधिकारस्य कुत्राप्यप्रतिषेधाच्च ।

नच "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिश्रुतिभिर्ब्राह्मणादीनामेवाग्न्या धानविधानाद्देवादीनां ब्राह्मण्याद्यभावेनाग्न्याधानासम्भवाद्यज्ञादिकर्मानधिकार इति वाच्यम्; मनुष्यकर्तृकस्याधानस्यैव त्रैवर्णिकाद्यधिकारिकत्वानियमात् । अन्यथा " देवा वै सत्रमासत " " विश्वसृजः प्रथमास्सत्रमासत " इत्यादिषु देवादीनां क्रत्वनुष्ठानप्रतिपादनविरोधात् । " ब्रह्म बृहस्पतिः क्षत्रमिन्द्रः " " मरुतो वै देवानां विशः " इत्यादिश्रुतिभिर्देवा-दिष्वपि क्षत्रियत्वादिजातिसद्भावप्रतिपादनेनाधानस्यापि सम्भवाच्च । इतिहासपुराणादिषु ब्रह्मादीनां यागाद्यनुष्ठानं च सुप्रसिद्धम् । तस्माद्देवादीनामप्यर्थित्वसामर्थ्ययोस्सद्भावाद्ब्रह्मविद्यास्वधिकारसम्भव इति । देवादीना

कर्माधिकारश्च पूर्वपक्षप्रकरणे "**न ह्यशरीराणां देवादीनां विवेकविमोका दिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ती**" त्युक्त्या, सिद्धान्तकथनावसरे "**सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति**" इति संक्षेपेण विवेकाद्यनुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यसद्भावकथनाच्च भाष्यकारस्याभिमत इति स्पष्टम्। विवेकादिसाधनसप्तकमध्ये हि कर्मणो प्यन्तर्भावोस्ति। उक्तं हि साधनसप्तकविवरणावसरे "**पञ्चमहायज्ञाद्यनुष्ठानं शक्तित क्रिये**" ति वाक्यग्रन्थोदाहरणमुखेन यज्ञादीनामेव क्रिया शब्दार्थत्वम्। श्रुतप्रकाशिकायां च देवताधिकरणप्रथमसूत्रभाष्यव्याख्याने सर्वमिदं स्पष्टम्।

एतेन— "तर्हि देवतानां कर्मानधिकारप्रतिपादकमुत्तरमीमांसागतं देवताधिकरणं निरालम्बनं स्यात्" इत्युक्तिः परास्ता, अस्माभिर्देवादीनां कर्माधिकारसद्भावस्वीकारात्। शङ्करभाष्येपि देवादीनां कर्मानधिकारस्स्पष्ट तया नोक्तः। अस्तु वा भगवतश्शङ्कराचार्यस्यानभिमतो देवादीनां कर्म स्वधिकारः। तावता न श्रीभाष्यकारपक्षे कोपि दोषः प्रसज्येत। कर्मणां विविदिषामात्रोपयोगमङ्गीकुर्वतश्शङ्कराचार्यस्य तथाभिप्रायस्स्यादपि, ब्रह्म विद्यायाः कर्माङ्गकत्वमङ्गीकुर्वतश्श्रीभाष्यकारस्य तु नायमभिप्राय इति स्पष्टं तद्ग्रन्थेषु।

यत्त्वयमन्ते— "अतो वयं प्रतीमः - **अथातो ब्रह्मजिज्ञासे**त्यत्र शमदमादिसाधनचतुष्टयसम्पत्त्यनन्तरमेव ब्रह्मजिज्ञासा समुत्पद्यत इत्यद्वैत भाष्यकाराणां विवरणमेव सूत्रकोटौ प्रविष्टमिति, न कथमपि विशिष्टाद्वैत भाष्यस्योत्थानमपि सम्भवतीति शम्" इत्याह।

तत्र वदामः— ब्रह्मविचारं प्रति शमदमादिसाधनचतुष्टय सम्पत्तेः पूर्वभावित्वे कदापि कस्यापि ब्रह्मजिज्ञासायां प्रवृत्तिरेव न सम्भ वति। नित्यस्यात्मनोऽनित्यानां देहेन्द्रियादीनां च विवेक इति वा नित्या नित्यवस्तुगतसुखत्वदुःखत्वनिर्णय इति वा शब्दार्थाङ्गीकारे ब्रह्मविचारात्पूर्वं

तादृशनिर्णयासम्भवात् । यदि ब्रह्मविचारात्पूर्वमेव नित्यस्य प्रत्यगात्मनोऽनित्यानां देहादीनां च विवेको–निश्चयः स्यात् , व्यर्थस्तर्हि ब्रह्मविचार आपद्यते । नित्यम्- सत्यम्– आस्थागोचरः , अनित्यम्—अनृतम्–अनास्थागोचरः , तद्धर्मौ सुखत्वदुःखत्वरूपौ, तन्निश्चयश्च सत्यासत्ययोस्सुखत्वदुःखत्वनिश्चयः । तत्र चेदं सत्यमिदमसत्यमिति निश्चयो ब्रह्मविचारात्पूर्वं न सम्भवत्येव । यदि पुनर्यत्सत्यं तत्सुखं यदसत्यं तदसुखमिति सामान्यतो निश्चयो विवक्षितः, न तावता ब्रह्मविचारे नियमेन प्रवृत्तिस्सम्भवति । न खलु किं सत्यं किमसत्यमिति निश्चयार्थं ब्रह्मविचार एव सर्वोऽपि प्रवर्तत इति वक्तुं शक्यते । सन्ति च शास्त्रान्तराणि बहूनि । तत्राप्यन्वेषणं सत्यासत्ययोर्वस्तुनोः कर्तुमर्हत्येव पुरुषः । साङ्ख्यादिशास्त्राणामतत्ववेदकत्वात्तत्र न प्रवर्तत इति चेत् , तेषामतत्ववेदकत्वनिश्चयोऽपि ब्रह्ममीमांसासाध्य इति न ब्रह्मविचारात्पूर्वं तत्सम्भवः । शमदमादिविचारश्च ब्रह्ममीमांसायामेव 'शमदमाद्युपेतस्स्यादि' त्यादिना क्रियते, ततश्च तस्यापि पूर्वमसम्भवः । नित्यानित्यवस्तुविवेकाभावे तन्मूलकस्येहामुत्रार्थभोगविरागस्याप्यसम्भवः । तन्मूलकं च मुमुक्षुत्वं सुतरां न सम्भवति । इत्थं साधनचतुष्टयस्य ब्रह्मविचारात्पूर्वमसम्भवात्तत्पूर्ववृत्तत्ववर्णनपरस्य शाङ्करभाष्यस्यानुत्थानं वा श्रीभाष्यस्यानुत्थानं वा इति पश्यत्वयम् । "स्वाध्यायोऽध्येतव्य" इति विधिप्रयुक्ताध्ययनगृहीतसाङ्गसशिरस्क कृत्स्नस्वाध्यायवतः कर्मब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतिमतस्तन्निर्णयार्थं स्वभावत एव कर्मविचारे पुरुषस्य प्रथमं प्रवृत्त्या कर्मविचारस्य पूर्ववृत्तत्वमप्रतिहतमिति स्पष्टं विवेचकानाम् ॥

वङ्गेष्वशोकनाथाख्यो भट्टाचार्योऽस्ति कश्चन ।
निबन्धमलिखत्कंचित्स श्रीभाष्यविमर्शनम् ॥
काञ्चीनिवासी श्रीवादिभीकरार्यान्वयोद्भवः
अनन्तार्यसुधीस्तस्य परीक्षामकरोदिमाम् ॥

## श्रीभाष्यविमर्शनम् ।

[ निबन्धकः — श्रीमदशोकनाथभट्टाचार्यः एम् ए ]

लोकायत जैनसौगतवैशेषिक नैयायिकपातञ्जलकापिलाद्वैत विशिष्टाद्वैतादिदर्शनेषु विशिष्टाद्वैतदर्शनमेव शांकराद्वैतदर्शनस्य प्रबलप्रतिपक्षत यावतिष्ठत इति तमेव विषयमधिकृत्य किञ्चिदिवात्र प्रस्तावयामः । तत्रादौ ——

अखिलभुवनजन्मस्थेमभङ्गादिलीले
  विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
  भवतु मम परस्मिन शेमुषी भक्तिरूपा ॥ इति ,

पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थितां
आनीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥

इति च माङ्गळिकश्लोकद्वयं भाष्यतामर्हति न वेति संक्षेपत आलोचयामः ।

तथाहि भाष्यलक्षणं लिङ्गादिसंग्रहटीकायामुक्तं भरतेन ——

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु " रिति ॥

सूत्रोक्तार्थप्रपञ्चकत्वं भाष्यत्वमित्यपि संक्षेपलक्षणम् । अत्र तु मङ्गळाचरणार्थं प्रयुक्ते श्लोकद्वये सूत्रानुसारिभिः पदैः सूत्रार्थवर्णनं क्रियते भगवता श्रीभाष्यकारेणेति कथमपि कैश्चिन्न वर्णयितुं शक्येत । नापि वा तत्र स्वपदानां वर्णना दृश्यते । अतः श्लोकद्वयं न सूत्रारूढम् , किन्तु सूत्रमेवेति प्रतिभाति ।

केचित् खल्वत्र प्रारिप्सितस्य प्रबन्धस्याविघ्नसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपमङ्गळमपेक्षितमेवेत्याहुः । तत्रापि मंगळस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापा

दिति युक्तं मुक्तावळीवचनमुत्पश्यामः । न खलु विशिष्टाद्वैतिभिः श्रीभाष्यकारस्य विघ्नसद्भावः कल्प्यते । तन्मते हि भगवदनन्तावतारस्य श्रीमद्रामानुजाचार्यस्य दुरितजन्यविघ्नेनाभिभूतत्वशंका सर्वथा अनवकाशैव । एतदुक्तं भवति । न हि स्वतस्सिद्धविघ्नाविरहवता लोकातिशायिना पुरुषेण कृतस्य मंगळस्य निष्फलत्वापत्तिः ; विघ्नाशंकया तदाचरणादिति चेन्न, विघ्नसद्भावो विघ्नाशंका वाऽमुक्तपक्ष एव कल्पयितुं युज्यते । जीवन्मुक्तस्य पुनर्भाष्यकारस्य कुतस्तदाशंका ? सत्यां तु तदाशंकायां भाष्यकारस्य गौरवहानिः प्रसज्येत । नापि वा मंगळमेव सर्वत्र विघ्नध्वंसे कारणम्, विघ्नध्वंसविशेषे विनायकस्तवपाठादीति सिद्धान्तमुक्तावल्यां प्रतिपादितत्वात् । न च विनायकस्तवपाठस्य मंगळत्वं वाच्यम्, "विनायकस्तवस्य मंगळत्वेधि तदनुकूलकण्ठाभिघातरूपस्य तत्पाठस्य मंगळत्वाभावात् ।" एवं हि पूतिकूष्माण्डीभूते खलु मंगळे, तत्र प्रेक्षावतां प्रवृत्तिरेव नोपपन्ना भवति ।

अथ मंगळं यद्येकान्तेनापेक्षितं भवेत्, तदा सूत्रान्तर्भूते "नाथ" शब्देन ब्रह्मशब्देन च तस्य गतार्थता स्यात् । भगवता भाष्यकारेणैवोच्यते —

"ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषो ऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमो भिधीयते" । इति ।

अथशब्दश्च आनन्तर्यार्थोपि श्रुत्या मंगळप्रयोजनो भवतीति शास्त्रसम्मतम् । तथा च स्मर्यते —

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तस्मान्मांगाळिकावुभा" विति ॥

मोहरागाद्यखिलदोषसंजननी दुरत्यया ऽविद्यापि यस्य खलु ब्रह्मणः साक्षात्कारेण विनिवर्तते, तस्यैव ब्रह्मणः प्रतिपादनपरे ब्रह्ममीमांसाभाष्ये पृथङ्निवेशितं मंगळं पुनरुक्ततामेवापद्यते ।

जीवन्मुक्तपुरुषो हि भगवान् भाष्यकार इत्यवश्यमेवोरीकर्तव्यं विशिष्टाद्वैतिभिः ; अतीन्द्रियार्थप्रतिपादने अतत्त्वविदां येषां केषां वा अनधिकारात् । लोकसंग्रहार्थं मननमुखेनैव वेदान्तार्थपरीक्षारूपं भाष्यं तैरत्र विरच्यते । मंगलममंगलं वा अमुक्तस्यैव विघ्नध्वंसे विघ्नाध्वंसे वा तथा चार्थात् ग्रन्थस्य परिसमाप्तावसमाप्तौ वा नियामकं भवतीति युक्तम् । न ताभ्यां मंगळामंगळाभ्यां तत्त्वज्ञानिनां किमपि प्रयोजनम् , संकल्पद्वारेणैव तेषामिष्टसाधनसामर्थ्यदर्शनात् । तदुक्तं भगवता बादरायणेन " संकल्पादेव तच्छ्रुते " रिति । ( ४-४-८ ) अतो मुक्तस्य भाष्यकारस्य ग्रन्थरचनावसरे मंगळस्य नियतोपस्थितिकत्वकल्पनेन भाष्यकृतो मुक्तत्वमपि व्याहन्येत । एवमेव विषयं मनसि निधायाद्वैताचार्यभगवत्पादैः स्वरचितशारीरकमीमांसाभाष्ये पृथक् मंगळं न निवेशितामिति मन्यामहे ।

अथ मा भवतु मंगळं शांकरभाष्ये , अध्यासमर्थनं तु विद्यते तत्र । भाष्यकारेण हि सौत्रपदसूचितानामेवार्थानां निरूपणं कर्तव्यम् अध्यासः पुन " रथातो ब्रह्मजिज्ञासे " ति सूत्रघटकेन केनापि पदे न स्पष्टं न संसूच्यते । तथा च शंकरभगवत्पादानामध्यासभाष्यं कथं वा सूत्रारूढमिति शंकात्र समापतति । इदमेवात्र समाधानम् । अथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्देनैवान्तःकरणस्य चैतन्ये आरोपोपि सूच्यत एव । तथाहि ब्रह्मशब्दस्य कर्तृत्वादिविगळितचैतन्यस्वरूपमर्थः । कर्तृत्वाधिष्ठानचैतन्ये अभावश्च कर्तृत्वादीनां चैतन्ये कल्पितत्वमन्तरेण न सम्भवति । यत् यत्र प्रतीयते तत्तत्र तदैवाविद्यमानमिति वर्णयितुं शक्यते , यदि तत्तत्र कल्पितम् , तदा रज्जौ प्रतीयमानस्सर्पः कल्पितत्वान्न रज्जौ वर्तते , एवं कर्तृत्वस्यापि चैतन्ये अभावो यदि कल्पितत्वेनैव सम्भवति , तर्हि कर्तृत्वादिविगळितचैतन्यबोधकेन ब्रह्मपदेन कथं कर्तृत्वाद्यारोपोपि न सूच्यते ; एवं च

ब्रह्मपदसूचितत्वादध्यासस्य, अध्यासभाष्यं सूत्रारूढमिति बहुशो विचारितत्वाद्‌द्वैतिभिर्नात्र पुनर्वयं पिष्टं पेषयामः ।

वस्तुतस्तु भाष्यकळेबरे मंगळाविनियोजनेन न केवलं भाष्यकारस्य विघ्नाप्रतियोगित्वं वैयर्थ्यमापद्येत, किन्तु भाष्यस्य भाष्यत्वमपि वितथं स्यात् ।

ननु भामतीप्रभृतिषु प्रभूतमेव मंगळं दृश्यत इति कथं वा तेषां ग्रन्थानां प्रामाण्यमिति चेदुच्यते, भामती नाम वाचस्पतिभिश्चकृता टीका शांकरभाष्यविषयिणी । न हि खलु श्रीभाष्यं सर्वथा तदनुरूपम् । श्रीभाष्यविवरणादिषु श्रुतप्रकाशिकादिषु मंगळं दृश्यते चेत्, तदानीं न कोपि दोषः । परं तु श्रीभाष्ये तस्यान्तर्भावदर्शनेन टंकद्रमिडादिभिरेव कृतं मूलं भाष्यं, श्रीभाष्यं पुनस्तेषामन्यतरस्य टीकारूपमिति शंका सञ्जायते ।

ननु सम्प्रदायसंरक्षणार्थं मंगळं भाष्ये निवेशनीयमेव शिष्टाचारोपरोधादिति चेन्न, शिष्यशिक्षार्थं कृतस्य मंगळस्य ग्रन्थकळेबरेऽयोजनेनाप्यभीष्टसिद्धेः ।

एवं हि पक्षद्वयमेवात्र सम्प्राप्तम् — मंगळपरिवर्जनं तत्परिरक्षणं वा । तयोरन्यतर एव पक्षोत्र समाश्रयणीयः । तत्र द्वितीयपक्षांगीकारेण श्रीभाष्यं "श्रीटीका" भवतीत्यतो भाष्यकळेबरान्मंगळस्यैव परिवर्जनं साधीय इति मन्यामहे ।

एतेनैव "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति वाक्यद्वयस्यापि प्रत्याख्यानं व्याख्यातमेव । शिष्टाचारसिद्धत्वान्मंगळस्य तन्निवेशने तावदनुकूलतर्कसद्भावः कथमपि कल्पयितुं शक्यते । अत्र पुनरनुगुणा युक्तिः काचिदपि न दृश्यते । प्रतिज्ञारूपत्वाद्वाक्यद्वयस्येति तयोरपि परिवर्जनमवस्थितमेव । अपि चैतेन विशिष्टाद्वैतभाष्यं खलु

बोधायनवृत्तिवद्वृत्तिरूपं, न तु पुनर्भाष्यमेव (यथा बहूनां सम्मतम्) इत्यनतिदुर्बला नवीना काचित् शङ्केह निरर्गळमवकाशते।

ननु श्रीमद्भगवद्गीताभाष्ये खलु अद्वैताचार्यभगवत्पादैरपि —

"नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी"॥ इति

मंगळमुपक्षिप्तम्, तथा च "स भगवान् सृष्ट्वेदं जगदि" त्यादिनोपोद्घातश्च भाष्यांगतया विनियोजित इति कथं न भाष्यस्य वैयर्थ्यापत्तिरिति चेदुच्यते, नायं दोषः। सूत्रभाष्य एव सूत्रानुसारिपदैर्भाष्यकृता सूत्रार्थवर्णनं, स्वकृतसंग्रहवाक्यानां च विभागवर्णनं कर्तव्यम्, नत्वन्यत्र। अत एव श्रीमद्भगवद्गीताभाष्ये वैदिकसंहितोपनिषदादीनां च भाष्ये मंगळोपोद्घातादिकं न दोषायेति तत्र मंगळं क्षोदक्षममिति मन्यामहे। तथा च श्रीमद्भगवद्गीताभाष्ये "नारायणः परोऽव्यक्ता" दिति श्लोको न मंगळरूपः, तच्छास्त्रप्रतिपादितभगवत्स्वरूपवर्णनार्थमेव प्रयुक्तत्वात्। अध्यासभाष्यवत् शारीरकभाष्यस्य उपोद्घातश्चापि गीतानां सारसंक्षेप इति कृत्वा तस्य प्रामाण्यं सर्वथा यथापूर्वमव्याहतमेवेत्याशयोऽद्वैतिनामिति प्रकृतं विषयमुपसंहरामः।

अथात्रावसरप्राप्तं जिज्ञासाधिकरणस्य किं विशिष्टाद्वैत एव परमतात्पर्यमुताद्वैत इति विषयमवलम्ब्य किञ्चिदिव लेखनीं व्यापारयामः। तदर्थं श्रीभाष्यमेव प्रथममनुसरामः।

जिज्ञासाधिकरणे उपक्रमपङ्क्तयस्तावत् —— "अत्रायमथशब्द आनन्तर्ये भवति। अतश्शब्दो वृत्तस्य हेतुभावे अधीतसांगसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी" ति।

अत्र खलु "अधीतसांगसशिरस्कवेदस्ये" त्यादिना ब्रह्मजिज्ञासायाः स्वाध्यायानन्तर्यं सामान्यतः परिसच्यते। "अधिगताल्पास्थिर

फलकेवलकर्मज्ञाने " त्यादिना नित्यानित्यवस्तुविवेकरूपसाधनानन्तर्य्यमुपदिश्यते । नित्यानित्यवस्तुनोर्विवेकेनैव इहामुत्रार्थभोगविरागः समुत्पद्यते । ततो मुमुक्षुत्वम् । एतदपि पुनः " सञ्जातमोक्षाभिलाषस्ये " ति पदेन गतार्थं भवति ।

अथेदानीमद्वैतभाष्यं पर्य्यालोच्यते चेत्तत्रापि " अथातः " शब्दयोर्व्याख्यानं समानमेव । तथाहि ——

" तत्राथशब्द आनन्तर्य्यार्थः परिगृह्यते । स्वाध्यायानन्तर्यं तु समानम् । तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति । उच्यते —— नित्यानित्यवस्तुविवेकः , इहामुत्रार्थभोगविरागः , शमदमादिसाधनसम्पत् , मुमुक्षुत्वं च । तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्य्यमुपदिश्यते । अतश्शब्दो हेत्वर्थः । " इति ।

अथशब्द उभयत्रैवानन्तर्य्याभिधेयवचनः । तत्र हि अद्वैतभाष्यस्य साधनचतुष्टयानन्तर्य्यमेवाभिप्रायः । विशिष्टाद्वैतभाष्यस्यापि तथेति प्रतीयते । अद्वैतभाष्ये खलु साधनचतुष्टयी कण्ठोक्ता निरूपिता , विशिष्टाद्वैतभाष्ये पुनरिहामुत्रार्थभोगविरागः शमदमादिसाधनसम्पच्चेति साधनद्वयं शब्दतो न निरूपितं , किं तु अर्थादेव । एवं हि " अथातः " शब्दव्याख्याने श्रीभाष्यस्य न कोपि तादृशो विशिष्टविशेषः प्रतीयते । तदेतद्रामानुजमतानुसारिणः प्रतिक्षिपन्ति । तथाहि —— इयं नाम विशिष्टता विशिष्टाद्वैतभाष्यस्य यद्विशिष्टाद्वैतमते कर्मस्वरूपज्ञानविशिष्टकर्मफलानित्यत्वज्ञानं ब्रह्मविचारसाधनम् । अद्वैतमते तु कर्मफलानित्यत्वज्ञानमेव तद्घटकमिति ।

इदमेवात्रालोचनीयम् —— कर्मस्वरूपविचारोपि ब्रह्मविचारपूर्ववृत्त इति विशिष्टाद्वैतभाष्यसिद्धान्तः किमस्ति सूत्रारूढ इति ।

तत्रादावयमेव प्रश्नो भवितुमर्हति —— कुत्र नामाल्पास्थिरफलवत् कर्मस्वरूपविचार तदपर्येव इति । न तावज्जैमिनीये कर्मविचारे ; तत्र

हि कर्मस्वरूपमेव विचार्यते न तु पुनः कर्मफलानां नित्यत्वानित्यत्वादिक मपि। तद्धि ब्रह्ममीमांसायास्तृतीयाध्यायचतुर्थपादेन खलु विचार्यते। यदि तावद्ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादप्रतिपादितमेव साधनमथातो ब्रह्मजिज्ञासेत्यत्र अथशब्दार्थानन्तर्यप्रतियोगितया विवक्षणीयम्, तर्हि इयमेका महती शंका समुन्मिषति, यत् कथं नाम कर्मस्वरूपविचारोपि ब्रह्मविचारसाधनतया अथशब्दार्थविवरणावसरे विवक्षितुं शक्यत इति। विदितमेवेदं सर्वेषां यज्जैमिनीयकर्मविचारो द्वादशलक्षणरूपो ब्रह्ममी मांसातृतीयाध्यायचतुर्थपादे तदनन्तरं वा न वर्तत इति। अतोऽत्र इदं वक्तव्यम् यज्जैमिनीयकर्मविचारोपि ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादेन कथञ्चन संगच्छत इति श्रीभाष्यकारस्याशय इति। युक्तञ्च तत्।

अत एवोक्तं श्रुतप्रकाशिकायाम्— "अर्थक्रमात् ब्रह्ममीमांसा तृतयिलक्षणचतुर्थपादेन कर्मविचारः संगतः। प्रतिपत्तिसौकर्यलक्षणक्र मात्तु कर्मविचारस्य पूर्वभाव" इति।

स्पष्टमिदं गमयति श्रुतप्रकाशिकाविवरणं, यदथातो ब्रह्मजिज्ञा सेति प्राथमिकी प्रतिज्ञा; अथातो धर्मजिज्ञासेत्यादिकं तु ब्रह्ममीमांसा तृतीयाध्यायचतुर्थपादशेषतामेतीति। तदिदं सिद्धम्— यज्जैमिनीय कर्मविचारोपि तृतीयाध्यायचतुर्थपादशेषत्वात साधनाध्यायगम्य इति ब्रह्मविचारपूर्वतन इति श्रीभाष्यमतं युक्तमेवेति।

इदमेकमस्वारस्यं सर्वेषां पुरतः स्फुरति, यत् सर्वोपि जैमि नीयकर्मविचारः कथं वा ब्रह्ममीमांसातृतीयाध्यायचतुर्थपादशेषतां नेय इति। अपरं चेदमस्वारस्यम, यद् गृहस्थानां कर्मविचारानन्तरं ब्रह्म विचारः नैष्ठिकादीनां शमदमाद्यनन्तरमेव ब्रह्मविचार इति सर्वेषां अधिकारिणामेकं साधनं न नियम्यत इति।

अत्रानुसन्धेयानि श्रीभाष्यवाक्यानीमान्येव— अत एव चाग्नी न्धनाद्यनपेक्षेति (ब्र, सू, ३-४-२५) सूत्रे— -

" ...... विद्यावन्त ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तमूर्ध्व रेतस्सु च शब्दे हि " ( ब्र, सू, ३-४-१७ ) इत्यादिभिः सूत्रैः। इदानीमूर्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न सम्भवतीत्याशंक्याह अत एव चाग्नीन्धनाद्यनपेक्षेति। यत ऊर्ध्वरेतस आश्रमिणो विद्या सम्बन्धित्वेन श्रुत्या परिगृह्यन्ते ...... अत एवोर्ध्वरेतस्सु विद्याग्नीन्ध नाद्यनपेक्षा। आधान - पूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या, केवलस्वाश्रमविहितकर्मापेक्षा " इत्यर्थः।

तथा च " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववद् " दिति ( ब्र, सू, ३ ४ २६ ) सूत्रे --

" यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति। यज्ञादिश्रुतिरपि विविदिषन्ति ( बृ, ४ ४ २२ ) इति शब्दात् कर्मणो वेदनांगत्वं न प्रतिपादयति। अत आह; सर्वापेक्षेति। अग्निहोत्रादि-सर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु। कुतः? यज्ञादिश्रुतेः। अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिक सर्वकर्मापेक्षा विद्या।

अपरं खल्वस्वारस्यमिदमेव —— यद्देवताधिकरणेन देवतानां ब्रह्मविचारेऽधिकारो यः साधितः, स ( ब्रह्मविचारो ) यदि जैमिनीयकर्मविचारानन्तरमेव कर्तव्य इति विवक्ष्यते, तर्हि देवतानां कर्मानधिकारप्रतिपादकमुत्तरमीमांसागतं देवताधिकरणं निरालम्बनं स्यात्। एतदुक्तं भवति। जैमिनीयकर्मविचारो हि " स्वाध्यायोऽध्येतव्य " इति विधिप्रयुक्तः। देवतानां वेदाध्ययनानधिकारिणां कथमपि नायं विधिः प्राप्त इति ब्रह्मविचारस्य जैमिनीयकर्मविचारानन्तर्यविवक्षायां उत्तरमीमांसागतं देवताधिकरणमत्यन्तमसंगतं स्यादिति।

अतो वयं प्रतीमः--- यदथातो ब्रह्मजिज्ञासेत्यत्र शमदमादि साधनचतुष्टयसम्पत्त्यनन्तरमेव ब्रह्मजिज्ञासा समुत्पद्यत इत्यद्वैतभाष्य काराणां विवरणमेव सूत्रकोटौ प्रविष्टमिति, न कथमपि विशिष्टाद्वैतभाष्यस्योत्थानमपि सम्भवतीति शम।

—— (*) ——

# पुस्तकानि ।

वैदिक ग्रन्थाः ।

| न. | नाम | रु | आ |
|---|---|---|---|
| १. | श्रीसूक्तभाष्यम्. | ० | २ |
| २. | पुरुषसूक्तभाष्यम् | १ | ० |
| ३. | तैत्तिरीयोपनिषद्भाष्यम् | ३ | ० |
| ४. | सन्ध्यावन्दनभाष्यम् | ० | ८ |

**वेदान्त ग्रन्थाः ।**

| न. | नाम | रु | आ |
|---|---|---|---|
| ५. | शतदूषणी भा–१ | ४ | ६ |
| ६. | शतदूषणी भा-२ | ३ | १२ |
| ७. | शतदूषणी भा--३ | ३ | १२ |
| ८. | शतदूषणी भा ४ | ३ | १२ |
| ९. | भगवद्गीता प्रतिपदार्थविवरणसहिता | २ | २ |
| १०. | भगवद्गीता-वरवरमुनि व्याख्यासहिता | २ | ४ |
| ११ | गीतार्थसंग्रहः-रक्षया सहितः | ० | ६ |
| १२. | तत्वनिर्णयः (शैववैष्णववादः) | ० | ४ |
| १३. | सिद्धान्तचिन्तामणिः | ० | १२ |
| १४. | पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः) | ४ | ० |
| १५. | यतिलिङ्गसमर्थनम् | ० | ४ |
| १६. | प्रपन्नपारिजातः | ० | ४ |
| १८. | भेदवादः तत्क्रतुन्यायविचारश्च | ० | ६ |
| १९. | दृश्यत्वानुमाननिरासवादः मोक्षकारणतावादश्च | ० | ४ |
| २०. | कार्याधिकरणवादः भा १ | ० | १० |
| २१. | कार्याधिकरणवादः भा २ | १ | ० |
| २२. | कार्याधिकरणतत्वम् | ० | १४ |

**मीमांसा ग्रन्थाः ।**

| न. | नाम | रु | आ |
|---|---|---|---|
| २३. | भाट्टरहस्यम् | १ | ८ |
| २४. | मीमांसापादुका | ० | ७ |
| २५. | मीमांसाकौस्तुभः भा १ | १ | ४ |
| २६. | मीमांसाकौस्तुभः भा ४ | १ | ६ |
| २७. | मीमांसाकौस्तुभः भा ५ | १ | ६ |
| २८. | सेश्वरमीमांसा | १ | १४ |

न्याय ग्रन्थाः ।

| न. | नाम | रु | आ |
|---|---|---|---|
| २९. | प्रामाण्यवादः | ३ | २ |
| ३०. | अवच्छेदकतानिरुक्तिः | ० | १५ |
| ३१. | बाधगादाधरी | ० | १५ |
| ३२. | मूलगदाधरीये शब्दखण्डः | १ | ४ |
| ३३. | शतकोटिः | ० | ६ |
| ३४. | उपाधिवादः- गदाधरस्य | १ | १४ |

[illegible] 0 2

३८. पक्षता-गादाधरी १ ०

३९. व्युत्पत्तिवाद: २ ०

౪౦. సవ్యభిచారసామాన్య నిరుక్తిః ౦ ౧ ౨

४१. सामान्यनिरुक्ति: ० १२

४२. पदवाक्यरत्नाकर: २ ८

౪౩. [illegible] ౧ ౦

४४. सत्प्रतिपक्षग्रन्थ: ० १४

४५. तत्वचिन्तामणौ अवयवग्रन्थ: यन्त्रस्थ:

## पाञ्चरात्र ग्रन्थाः ।

४६. सात्वतसंहिता २ ८

४७. ईश्वरसंहिता ७ ८

## सम्प्रदाय ग्रन्थाः ।

४८. मुमुक्षुप्पडिरहस्यम् ० ४

४९. श्रीवचनभूषणम् ८ ८

५०. श्रीवादिभीकरवैभवम् [सचित्रं] ० ६

५१. श्रीवादिभीकरवैभवम् [चित्ररहितम्] ० ४

52. [illegible] 0 [illegible]

౫౩. [illegible] ౨ ౦

54. [illegible] 0 4

58. தத்வமணி அச்சில்

59. ஏகமேவாத்விதீயம் ,,

60. வேதம். 0 2

61. மோக்ஷம். 0 2

## आख्यायिकाः ।

६२. संसारचक्रम् भा-१ १ ०

६३. संसारचक्रम् भा-२ ० १२

६४. युगलांगुलीयम् ० २

६५. पर्यटनोदन्त: [यन्त्रस्थ]

౫౬. [illegible] ౦ ౧ ౨

## पुराण ग्रन्थाः ।

६६. काञ्चीमाहात्म्यम् १ १२

౬౭. [illegible] ౧ ౨

६८. महाभारते शान्तिपर्व: [यन्त्रस्थ]

## दिव्यप्रबन्ध व्याख्यान ग्रन्थाः ।

69. திருப்பல்லாண்டு, பெரியாழ்வார் திருமொழி வியாக்கியானம். ... ... 0 4

70. பெருமாள் திருமொழி வியாக்கியானம். 0 4

71. திருச்சந்த விருத்த வியாக்கியானம் ... 1 2

72. திருமாலை வியாக்கியானம் ... ... 0 12

73. திருப்பள்ளி யெழுச்சி வியாக்கியானம் 0 6

74. அமலனாதிபிரான் வியாக்கியானம் ... 0 6

75. கண்ணிநுண்சிறுத்தாம்பு வியாக்கியானம் 0 8

76 திருப்பாவை, நாச்சியார் திருமொழி, இவைகளின் வியாக்யானம் அச்சிடப்பட்டு வருகின்றன.

## कोश ग्रन्थाः ।

| | | |
|---|---|---|
| ७८. वाल्मीकिभावदीपः | १ | ० |
| ७९. लक्ष्मीसहस्रनामस्तोत्रम् | ० | २ |
| ८०. सुभाषितकौस्तुभ. | ० | ४ |
| ८१. सप्तभङ्गीतरङ्गिणी [जैनग्रन्थः] | ० | १० |
| ८२. सर्वदर्शनशिरोमणिः | ० | ३ |
| ८३. भस्मधारणविचारः | ० | २ |
| ८४. परतत्त्वनिर्णय | ० | २ |
| 85. [illegible] | 0 | 4 |
| 86 *Journal of P. B. Mutt* | *Free* | |
| 87 *History " " "* " | *Free* | |
| 88. [illegible] | 0 | 4 |
| ८९. दुर्वादिविधूननम् | ० | ८ |
| ౯౦. [illegible] | ౦. | ౧౨ |
| 91. [illegible] | 0 | 4 |
| ९२. बडबानलः | ० | ८ |
| ९३. अन्तर्व्याप्तिबहिर्व्याप्ति विचारः | ० | २ |
| ९४. ऐकशास्त्र्यमीमांसा | ० | ८ |
| ౯౫. [illegible] | ౦. | ౧ |
| ९६. सुदर्शनमीमांसा | ० | १० |
| 97. [illegible] | 2—8 | |
| ९८. श्रीवैष्णवमतदूषणोद्धार [यन्त्रस्थ] | | |
| ౯౯. పరమవైదిక సిద్ధాన్త తత్త్వ [illegible] [యన్త్రస్థ] | | |

| नं. नाम | रु. | आ |
|---|---|---|
| १०१. यतिराजवैभव | ० | ६ |
| १०२. उपनयनगायत्रीमीमांसापरीक्षा | | |
| १०३. चक्रधारणप्रमाणसंग्रह | ० | ४ |
| १०४. श्रीरामानुजसम्प्रदाय की प्राचीनता | ० | १ |
| १०५. विशिष्टाद्वैतसिद्धान्त सारसंग्रह | ० | १ |
| १०६. चक्रधारण क्यों करना चाहिये | ० | १ |
| १०७. सन्ध्यावन्दनविधि | ० | २ |
| १०८. व्रतोत्सवनिर्णय | ० | २ |
| १०९. तत्त्वोद्बोधन | ० | ४ |
| ११०. मिथ्या आक्षेपों का निरास | ० | २ |
| १११. तिरुप्पल्लाण्डु | ० | ४ |
| ११२. ऊर्ध्वपुण्ड्रधारणविधि | ० | १ |
| ११३. श्रीपराशरविशिष्टपरमधर्मशास्त्र | छपता है | |
| ११४. श्रीशाण्डिल्य विशिष्टपरमधर्मशास्त्र | छपता है | |
| ११५. तप्तमुद्राधारण पर निर्णयसिन्धुकार का फैसला | ० | २ |
| ११६. दिव्यदेश विवेचन | ० | १ |
| ११७. बम्बई का दिव्यदेश | छपता है | |
| ११८. वैदिकसर्वस्व का विशेषाङ्क | १ | ० |
| ११९. अद्वैत विवेचन। (यन्त्रस्थः) | | |

प्राप्तिस्थानम्—

## ॥ मञ्जुभाषिणी ॥

एतन्नाम्नी काचन संस्कृतभाषामयी साप्ताहिकी संवादपत्रिका प्रति
शुक्रवासरं श्रीसुदर्शनयन्त्रालयादवतरति । शार्वरिसंवत्सरे कृतावतार
अस्या इसम्प्रति अष्टविंशं वयः प्रचलति । अस्यास्सम्पादकाः—श्रीक.
प्रतिवादिभयंकरसिंहासनाधीश्वराः श्रीजगद्गुरु श्रीमदनन्ताचार्य स्वामिन
अस्यां सनातनधर्मसम्बन्धिनो नानाविधा उपन्यासाः, नानादेशवृत्तान्ताः
आख्यायिकाः, शास्त्रार्थाः, अन्ये च सामयिकास्समुचितविषयाः सरल
संस्कृतवाण्या प्रकाश्यन्ते । विदुषां विद्यार्थिनां च सैषा सुतरामुपयोगार्हा
अस्या वार्षिकमग्रिममूल्यम्—रूप्यत्रयमात्रम् । अन्यान् विवक्षितविषयानधि
पत्रद्वारा जानन्तु जिज्ञासवः ।

गुरुविलासः–मञ्जुभाषिणीकार्यालयः । श्रीसुदर्शप्रेस ।
कञ्जीबरम् । (मदरास)

—o—

## ॥ वैदिक सर्वस्वम् ॥

एतन्नामकं हिन्दीभाषामयं श्रीवैष्णवधर्ममर्मप्रकाशकं सनातनधर्म संरक्षणबद्धश्रद्धं आवश्यकदेशवृत्तान्त प्रकाशनपरं पूर्वपुण्यपुरुषचरित्रादि प्रख्यापनप्रवीणं व्रतोत्सवादिनिर्णयनिपुणं नवीन-आक्षेपसमाधानादि लेख प्रचुरं अन्यान्यविविधविचित्रविषयविन्याससुभगं मासिकपत्रं श्रीसुदर्शन मुद्रालयात्प्रतिमासमवतरति । अस्मिन् द्राविडदिव्यप्रबन्धानुवादाः द्राविड रहस्यप्रबन्धानुवादाश्च प्रकाश्यन्त इति विशिष्य वेदितव्यम् । श्रीवैष्णवा-नामवश्यसंग्राह्यमिदं पत्ररत्नमित्यत्र नास्ति सन्देहः । अस्य च सम्पादकाः त एव श्रीमदनन्ताचार्यस्वामिपादाः। वार्षिकमग्रिममूल्यम्-सार्धरूप्यद्वयम्

प्राप्तिस्थानम्—**वैदिक सर्वस्व कार्यालय, श्रीसुदर्शन प्रेस**